## नथूभाईमुद्रितसंस्कृतपुस्तकानि ।

| पुस्तकनाम | मूल्यम् | |
|---|---|---|
| श्रीमद्भागवतम् (विजयध्वजप्रणीतटीकासमेतम् ) | रू० १७ | आ० १२ |
| श्रीसुमध्वविजयः (मूलम्) | ० | १२ |
| श्रीमन्मध्वग्रंथाद्यन्तश्लोकाः (सटीकाः) | ० | ८ |
| नृसिंहस्तुतिः (सटीका) | ० | ४ |
| अणुमध्वविजयः (सटीकः) | ० | ८ |
| श्रीराघवेन्द्रस्तोत्रम् (सटीकम् ) | ० | ४ |
| द्वादशस्तोत्रम् | ० | ३ |
| पञ्चामृताद्यभिषेकसूक्तानि | ० | ७ |
| अणुभाष्यम् | | १ |
| छलारिकृतः स्मृत्यर्थसागरः | १ | १२ |
| श्रीमद्देवीभागवतम् (सटीकम्) | १० | ० |
| श्रीमद्भागवतम् (सचूर्णिकम्) | ९ | ० |
| श्रीमद्भागवतदशमस्कंधः (सचूर्णिकः) | ३ | ८ |

इत्यादि कालिकारथ्यायां चतुर्दशाधिकत्रिशततमद्वारस्थनथूभाईतल्लकचन्दसकाशान्मूल्येन प्राप्नुयुः ।

स्मृत्यर्थसागर,

मुंबईंत "निर्णयसागर" छापखान्यांत नथूभाई तल्लकचन्द यांनीं छापविला.

पुस्तकें मिळण्याचा ठिकाणा.— मुंबईंत काळकादेवीचा रस्ता, द्वारनंबर ३१४.



शके १८०७, सन १८८५.

## अथ वस्तुशुद्धितरंगः ।



॥ इति स्मृत्यर्थसागरविषयानुक्रमः ॥

श्री वेदव्यासाय नमः ॥ ॐ ॥ श्रीगुरुभ्यो नमः ॥ ॐ ॥ श्रीनृसिंहं मध्वगुरुं श्रीव्यासं नौमि सद्गुणं ॥ सुसुखं स्वात्मरूपं तं शुभकर्मफलप्रदं ॥ १ ॥ कलौ प्रवृत्ते बौद्धादिमतं रामानुजं तथा ॥ शके ह्येकोनपंचाशदधिकाब्दसहस्रके ॥ २ ॥ निराकर्तुं मुख्यवायुं सन्मतस्थापनाय च ॥ एकादशशते शाके विंशत्यष्टयुगे गते ॥ ३ ॥ अवतीर्णं मध्वगुरुं सदा वंदे महागुणं ॥ गुणाढ्यान् भगवद्भक्तान् जयतीर्थादिकान् गुरून् ॥ ४ ॥ संनम्य कुर्मस्तत्तुष्ट्यै स्पष्टं स्मृत्यर्थसागरं ॥ कालाशौचाह्निकानां ये वस्तुशुद्धेश्च निर्णयाः ॥५॥ चत्वारस्तु तरंगाख्याः प्रोच्यंतेऽत्र क्रमान्मया ॥ तत्रादौ सर्वधर्माणां हेतुत्वात्कालनिर्णयः ॥६॥ स चास्माभिर्निर्णेयः कालोऽब्दायनर्तुमासपक्षतिथिभेदेन षड्विधः ॥ तत्राब्दः पंचविधः ॥ तत्र मेषादिराशिषु मध्ये एकैकस्मिन्रा-

शौ यावत्कालं बृहस्पतिः संचरति तावान्कालः बार्हस्पत्यसंवत्सरः॥
तत्र बृहस्पतिःस्वयं यद्राशौ वर्तते तद्राश्यपेक्षया पूर्वराशिंप्रति गच्छ-
ति चेत्तदा स वक्र इत्युच्यते ॥ तद्राशौ क्लृप्तभोगाभावेऽपि परतश्चेद्ग-
च्छति स अतिचारीत्युच्यते ॥ अतिचारेण गतो बृहस्पतिः पूर्वराशिं-
प्रति आगत्य प्रायः स्वक्लृप्तकालं भुङ्क्ते ॥ यद्यनागत्य तथैव स्वस्थि-
तराशितः परराशिं प्रति गच्छति चेत्सकालः लुप्तसंवत्सर इत्युच्यते॥
तत्र संवत्सरे विवाहोपनयनादिशुभकार्याणि न कार्याणि ॥ तथा
च लल्लः॥ अतिचारगतो जीवस्तं राशिं नैति चेत्पुनः। लुप्तः संवत्स-
रो ज्ञेयः सर्वकर्मबहिष्कृत इति ॥ तं राशिं अतिचारगतराश्यपेक्ष-
या पूर्वराशिं। स कालः अतिचारराश्यपेक्षया पूर्वं बृहस्पतिस्थितरा-
शिकालः लुप्तसंवत्सरः ॥ तस्मिन् राशौ बृहस्पतेः क्लृप्तकालभो-

गाभावात् ॥ सर्वकर्मबहिष्कृतः नित्यनैमित्तिककर्मातिरिक्तकर्मबहि-
ष्कृतः ॥ तानि कर्माणि तत्र तत्र न कर्तव्यानीत्यर्थः ॥ नित्याद्य-
करणे प्रत्यवायप्राप्तेः ॥ बृहस्पतिः सिंहराशिस्थितश्चेद्गोदावर्यां सर्व-
तीर्थसंनिधानात्स्नानदानादिकं महाफलं ॥ तथाचोक्तं ॥ सिंहस्थि-
ते गौतमि देवि भद्रे ब्रह्मांडभांडोपगतानि पुण्ये ॥ भुव्यंतरिक्षे दिवि
नागलोके सर्वाणि तीर्थानि तवोदरे स्युः ॥ तिस्रः कोट्योऽर्धकोटिश्च
तीर्थानि भुवनत्रये॥ आयांति गौतमि स्नातुं सिंहस्थे च बृहस्पतौ ॥
बृहस्पते सुराध्यक्ष सर्वदेवनमस्कृत॥ गृहाणार्घ्यं मया दत्तं सिंहस्थो
भार्यया सह ॥ षष्टिवर्षसहस्राणिभागीरथ्यवगाहनं ॥ सकृद्गोदा-
वरीस्नानं सिंहस्थे च बृहस्पतौ ॥ अनेन प्रत्यहं स्नानं कुर्यात् ॥
अत्र गोदावरीयात्रायां सिंहस्थे बृहस्पतौ विदेशस्थानां मुंडनं।

तीर्थश्राद्धादिविषये गर्भिणीपतित्वादिप्रतिबंधो नास्ति ॥ तत्र तीरस्थानां मुंडनतीर्थोपवासौ न स्तः ॥ बृहस्पतेः सिंहप्रवेशानंतरं द्वादशदिनपर्यंतं गोदावर्यां पुष्करसंनिधानं ॥ तत्र स्नानदानादीनि विशेषफलदानि॥ तत्र विशेषकार्याणि सिंहस्थमाहात्म्ये द्रष्टव्यानि ॥ तीरस्थैर्नवमदिने तीर्थश्राद्धादिकं कार्यं ॥ तदुक्तं ब्रह्मांडे ॥ पिंडदानं तु यः कुर्यान्नवम्यां विधिपूर्वकं ॥ मुक्ता वै पितरः सर्वे तस्यैव तरसा नघेति ॥ अतिचारगतेऽपि जीवे गोदावरीस्नानादिकं महाफलमेव ॥ सिंहराशौ गते जीवे प्रजानां पापकारिणां ॥ वत्सरे यत्कृतं पुण्यं स्नानेनैकेन लभ्यते ॥ कथंचिदपि सिंहस्थे गुरौ स्नानं समाचरेत् ॥ गौतम्यां जन्मनः पुंसां तत्फलं जीवितस्य तु ॥ कथंचिदपि वक्रातिचारगत इत्यर्थः ॥ अतिचारगते जीवे यः पिबेद्गौतमीजलं ॥

तस्य जन्मशतं पापं तत्क्षणादेव नश्यतीति स्मृत्युक्तेः ॥ सिंहस्थे गुरौ गोदाभागीरथीमध्ये उपनायनादिशुभं न कार्यं ॥ गोदावर्या दक्षिणभागे गुरौ मघाव्यतिरिक्तसिंहस्थे विवाहादिशुभं न कार्यमेव ॥ तथा च लल्लः ॥ गोदाभागीरथीमध्ये नोद्वाहः सिंहगे गुरौ ॥ मघास्थे सर्वदेशेषु तथा मीनगते रवाविति ॥ तथा वसिष्ठः ॥ भागीरथ्युत्तरे कूले गौतम्या दक्षिणे तथा ॥ विवाहो व्रतबंधश्च सिंहस्थे ज्ञे न दुष्यति ॥ विवाहो दक्षिणे कूले गौतम्या नोत्तरत्र तु ॥ मघास्थे गुरावित्यन्वयः ॥ ज्ञे इत्यस्य गुरावित्यर्थः ॥ ज्ञ इत्यस्य बुध इत्यर्थस्तु न भवति ॥ बुधस्य श्रावणभाद्रपदमासान्यतरमास एव सिंहस्थत्वेन तयोश्चातुर्मास्यत्वेन विवाहकालत्वाभावात् ॥ तथावसिष्ठोऽपि ॥ वक्रेतिचारगे चैव सिंहस्थे सुरमंत्रिणि ॥

विवाहव्रतयात्रादि पुरहर्म्यगृहादिकं ॥ क्षौरं विद्योपविद्यां च यत्नतः परिवर्जयेदित्यत्र विवाहव्रतबंधग्रहणं तु गोदोत्तरतीरविषयं पूर्ववाक्ये तथोक्तेः ॥ पुष्करो नाम कर्माभिमानी देवः ॥ तीर्थराजश्च ॥ स गोदावर्या प्रार्थितः सन् सिंहस्थे च बृहस्पतौ वर्षमध्ये प्रथमभागद्वादशदिनेषु अंतिमद्वादशदिनेषु च गोदावर्यां संनिहितो विशेषफलप्रदः ॥ तथा चोक्तं ब्रह्मांडे ॥ गौतम्याः पुष्करस्यापि योगः पुष्करनामकः ॥ तत्र स्नानं च दानं च सर्वक्रतुफलं भवेत् ॥ आवत्सरं तु गौतम्यां स्नानदानैश्च यत्फलं ॥ तत्फलं समवाप्नोति यथैकदिवसे दिन इति ॥ अतिचारगतो जीवः सिंहराशिं गतो यदि ॥ मुंडनं नैव कर्तव्यं कर्तव्यं श्राद्धमात्रकं ॥ तथैकैकस्मिन्राशौ सूर्यः संचरति स सौरो मासः ॥ एवं सूर्यस्य द्वादशराशिसंचारे यावान्कालः स सौरो-

ब्दः ॥ कृष्णप्रतिपदमारभ्य पौर्णमासीपर्यंतं कालः शुक्लप्रतिपद-
मारभ्य अमावास्यांतो वा चांद्रो मासः ॥ एते द्वादश मिलित्वा चां-
द्रसंवत्सरः ॥ अश्विनीमारभ्य रेवतीपर्यंतं नक्षत्रेषु चंद्रसंचारकालः
नाक्षत्रो मासः ॥ त्रिंशद्दिनात्मकः सावनो मासः ॥ एतैर्द्वादश मासैः
क्रमेण नाक्षत्रः सावनश्च संवत्सरः ॥ अयनं द्विविधं ॥ मकरसंक्रां-
तिदिनापेक्षया पूर्वभागे अष्टादशदिनमारभ्य मिथुनसंक्रांतिदिना-
नंतरं द्वादशदिनपर्यंतमुत्तरायणं ॥ ततः परं धनुःसंक्रांतिदिनानंतरं
द्वादशदिनपर्यंतं दक्षिणायनं ॥ वसंताद्याः ऋतवो द्वेधा ॥ मीनाद्या
मेषाद्या वा सौराः ॥ चैत्राद्याश्चांद्राः ॥ तत्र द्वौद्वौ मासावेकैकर्तुः । ते च
वसंतग्रीष्मवर्षाशरद्धेमंतशिशिरभेदेन षड्विधाः ॥ अनेन मासः सौ-
रचांद्रनाक्षत्रसावनभेदेन चतुर्विधः ॥ अथ मलमासो निरूप्यते ॥ द्वा-

त्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिस्तथा ॥ घटिकानां चतुष्केण पतत्यधिकमासकः ॥ इति वचनाद्यदाधिको मासो जातस्तदनंतरमेतावत्परिमितकाले पुनरधिकमासो भवति ॥ इदं चोपलक्षणं ॥ क्वचित्त्रिंशद्भिः क्वचित्पंचत्रिंशद्भिर्मासैरधिकमासो भवतीत्यपि ग्राह्यं ॥ यस्मिन्मासे शुक्लप्रतिपदमारभ्यामावास्यासहितदिनेषु संक्रांतिर्न जायते स मलमासोऽधिकमास इति चोच्यते ॥ यदा तु शुक्लप्रतिपदाद्यमावास्यांतदिनयुक्तमासमध्ये संक्रांतिद्वयं स्यात्स क्षयमासः। स यस्मिन्वर्षे भवति तस्मिन्वर्षे क्षयमासात्पूर्वं मासत्रयमध्ये एकोधिमासो भवति। पश्चाच्च मासत्रयमध्ये एकोऽधिकमासः। एवं तस्मिन्वर्षेऽधिकमासद्वयं ॥ तदुक्तं ज्योतिःसिद्धांते ॥ असंक्रांतमासोऽधिमासः स्फुटः स्याद्द्विसंक्रातिमासः क्षयाख्यः कदाचित् ॥ क्षयः

कार्तिकादित्रये नान्यदा स्यात्तदा वर्षमध्येऽधिमासद्वयं चेति ॥ तृती-
यपादार्थस्तु क्षयमासस्य तु कदाचिदेवागमनेपि कार्तिकमार्गशीर्ष-
पौषनामकमासेष्वेवागमनं नान्यदेति ॥ यस्मिन्क्षयमासे धनुःसंक्र-
मणस्य न्यायत्वान्मार्गशीर्षत्वं तस्मिन्नमावास्याभागे मकरप्रवेशेन
पौषत्वं चेति तस्य द्विनामवत्त्वं ॥ मेषादिराशीनां क्रमेण चैत्रादिनाम-
वत्त्वात् ॥एवमन्यत्रापि क्षयमासे द्विनामवत्त्वं ज्ञेयं॥एवं द्विमासकार्या-
ण्यपि ॥तत्रायं क्रमः॥प्रतिपदादित्रिंशत्तिथीनां षष्टिघटिकात्मकानां
वृद्धिक्षयानुसारेण न्यूनाधिकानां च त्रिंशद्घटिकात्मके वा न्यूनाधि-
के वा पूर्वार्धे मार्गशीर्षेति संकल्पः ॥ उत्तरार्धे पौषेति संकल्पः॥
एवं द्वितीयसंक्रांतिप्रयुक्तपौषादीनामसंभवे सति शुद्धमासवत्त्वा-
तंत्र्यान्न पूर्वोत्तरमासशेषत्वशंकानवकाशः ॥ तथा च स्मृतिः ॥ ति-

थ्यर्धे प्रथमे पूर्वो द्वितीयेऽर्धे तदुत्तरः ॥ मासाविति बुधैश्चिंत्यौ क्षयमासस्य मध्यगाविति ॥ अस्यार्थः ॥ तिथ्यर्धे तिथानां प्रतिपदादीनां प्रथमेऽर्धे प्रथमार्धभागे पूर्वो मासो मार्गशीर्षमासो बोध्यः ॥ द्वितीयेऽर्धे प्रतिपदादितिथीनां द्वितीयार्धभागे तदुत्तरः पौषो मासो बोध्यः ॥ एवं पूर्वोत्तरमासौ एकस्य क्षयमासस्य मध्यगौ अंतर्भूताविति ॥ पंचांगे क्षयमासस्य प्रतिपदादितिथीनां यावत्यो घटिकास्तत्र पूर्वार्धभागस्य मार्गशीर्षत्वमुत्तरार्धस्य पौषत्वमिति ॥ तथा च मार्गशीर्षे प्रतिपत्सांवत्सरिकपौषश्राद्धादितिथीनां अपराह्णव्यापित्वादिकं न विचार्यं ॥ प्रतिपदादिपूर्वार्धभागे दिवा सायंकालानंतरं वा सति पूर्वार्धभागमध्य एव मार्गशीर्षप्रतिपदादिनिमित्तश्राद्धादिकं कार्यं ॥ एवं प्रतिपदाद्युत्तरार्धेसूर्योदयेसूर्यास्तमयानंतरं वा सति प्र-

तिपदाद्युत्तरार्धभागमध्य एव पौषमासप्रतिपदादिनिमित्तं श्राद्धादि-
कं कार्यं ॥ तत्र कुतुपापराण्हसंभवे कुतुपापराण्हमध्ये कार्यं ॥ तदसं-
भवे ग्रहणादिश्राद्धवद्रात्रौ कार्यं ॥ साधनद्वादशीश्राद्धवत्सूर्योदये
वा कार्यं । सामान्यभूतस्य कुतुपापराण्हकालविधायकवाक्यस्य मा-
सद्वयस्य क्षयमासस्य तिथिपूर्वोत्तरार्धमात्रांतर्गतत्वे विधायकवि-
शेषवाक्येन बाधितत्वेन क्षयमासातिरिक्तमासगतश्राद्धतिथिवि-
षयत्वात् ॥ एवंरात्रिश्राद्धे कर्तव्यतानिषेधकवाक्यानि क्षयमासाति-
रिक्तविषयाणि ॥ ग्रस्तोदयग्रस्तास्तमयग्रहणादिप्राप्तपित्रादिश्रा-
द्धवत्क्षयमासश्राद्धस्यापि क्षयमासनिमित्तकत्वात् ॥ एवं च कार्ति-
कमाघवैशाखस्नानानि तु सौरमासाश्रयेण प्रवृत्तत्वादरुणोदया-
दिकाले न विरुद्धानि । प्रातःस्नानं कार्तिके तु तुलासंस्थे दिवा-

करे ॥ माघमासे रटंत्यापः किंचिदभ्युदिते रवौ ॥ मकरस्थे रवौ माघे । वैशाखे सकलं मासं मेषसंक्रमणे रवावित्यादि वाक्येषु कार्तिकस्नानादीनां तुलादिसंक्रांतिपुरस्कारेण प्रवृत्तत्वात् संक्रांतिसूर्योदयादिपुरस्कारप्रवृत्तानां धर्माणां सौरमाश्रितानां अरुणोदयादिकालानुष्ठाने बाधकाभावेन चांद्रकार्तिकाद्यागमनप्रतीक्षापेक्षाभावात् ॥ अतएवाश्वयुजादिमासदशम्यादावपि कार्तिकादिस्नानारंभः ॥ तेषु मासेषु तुलादिसंबंधमात्रस्यैव स्नानप्रयोजकत्वात् ॥ एवमग्निहोत्रहोमस्यापि सायंप्रातरग्निहोत्रंजुहुयादिति श्रुतौ सायंकालाद्याश्रितस्य कार्तिकादिचांद्रमासानाश्रितत्वे क्षयमासस्य कार्तिकाद्यागमनप्रतीक्षापेक्षाभावात् प्रातःसायंकालयोः करणं न विरुद्धं ॥ चांद्रमासाश्रितत्वे तु ऐतरेयब्राह्मणे संवत्सरस्थप्रा-

तराहुतीनां सायमाहुतीनां च विंशत्यधिकसप्तशतत्वसंख्याकथनं विरुध्येत ॥ तत्र सावनमासाश्रयणस्याऽग्रे साधयिष्यमाणत्वात् ॥ अतएव संवत्सरस्य चतुर्दशमासत्त्वनिषेधः सावनत्वविवक्षयैवोपपन्नः ॥ अन्यथा त्रयोदशं तु श्रुतिराह ॥ मासश्चतुर्दशः क्वापि नचैव दृष्ट इति वाक्यविरोधप्रसंगात् ॥ अस्यार्थः ॥ द्वादश मासाः संवत्सर इत्युक्तेः सर्वत्र संवत्सरस्य द्वादशमासत्वेऽपि क्वचिदसंक्रांतिमासविवक्षया त्रयोदशत्वं श्रुतिराह ॥ चतुर्दशो मासस्तु नैव दृष्ट इति ॥ चांद्रमासविवक्षायां तु क्षयमासयुक्तवर्षे क्षयमासस्य मासद्वयात्मकत्वेन पूर्वोत्तराधिकमासयोर्द्वयोः सत्वाच्च ॥ चतुर्दशमासवत्त्वप्रसक्त्या नचैव दृष्ट इत्युक्तमयुक्तं स्यात् ॥ सावनविवक्षया तु क्षयमासस्य त्रिंशद्दिनात्मकत्वेन एकमासत्वात्संक्रां-

तिद्वययुक्तत्वेन द्विमासत्वेऽपि त्रयोदशमासवत्त्वविरोधात् ॥ नच क्षयमासाधिकमासयोश्चांद्रमासविवक्षाभावः॥ क्षयमासस्याधिकमासस्य च चांद्रमासत्वमेवेति माधवादिभिरुक्तत्वात् ॥ यत्तु माधवेनोक्तं असंक्रांतत्वेनाधिकत्वप्रसक्तियुक्तयोर्द्वयोर्मध्ये पूर्वस्याधिमासत्वनिषेधादिति ॥ तदयुक्तं ॥ स्वोदाहृतजाबालिवाक्ये ॥ एकस्मिन्नेव वर्षे तु द्वौ मासावधिमासकौ ॥ प्राकृतस्तत्र पूर्वः स्यादुत्तरस्तु मलिम्लुच इति पूर्वस्याप्यधिकमासत्वोक्तेस्तद्विरोधप्रसंगात् ॥ घटकन्यागते इति चैत्रात्पर्वौ नाधिकमास इत्यादिवाक्यानि तु क्षयमासरहितवर्षविषयत्वेन वक्ष्यन्ते॥ यत्तु । यद्वर्षमध्ये ह्यधिमासयुग्मं तत्कार्तिकादित्रितयं क्षयाख्यं । मासत्रयं त्याज्यमिदं प्रयत्नाद्विवाहयज्ञोत्सवमंगलेष्विति ज्योतिःशास्त्रवाक्यं ॥

तत्र ब्रह्मर्षिविवाहादेर्ज्योतिःशास्त्रेऽपि तिथिवारनक्षत्रादिकमयुक्तं त-
द्विषयं ज्ञेयं ॥ न तु राक्षसपैशाचविवाहपरं ॥ ज्योतिःशास्त्रे तत्र नक्ष-
त्रानुक्ते तत्प्रतीक्षासंभवाच्च ॥एवं यज्ञशब्देनाऽऽधानादिकमुत्सवस्त-
त्तन्मासोक्तनवरात्राद्युत्सवमंगलं नीराजनादिकं ज्योतिःशास्त्रप्रसिद्धं
वर्ज्यत्वेन ज्ञेयं ॥ ज्योतिःशास्त्रप्रसिद्धशिष्टाचारप्राप्तवसंतोत्सवादिकं
तु कर्तव्यत्वेन ज्ञेयं ॥ केचित्तु तिथ्यर्धे प्रथमः पूर्व इति वाक्यं क्षयमा-
समृतानामुत्पन्नानां च मृतोत्पन्नतिथिविषये मासनिर्णयार्थमित्याहुः
॥तदसंगतं ॥ सामान्यवाक्यस्य विशेषवाक्यं विना विशेषविषयत्वक-
थनस्याशक्यत्वात् ॥ निबंधकारवाक्यानामनार्यत्वेन प्रमाणत्वात्
माधवादिभिस्तथा व्याख्यानाच्च ॥ अन्यथा न हिंस्यात्सर्वाणि भूता-
नीति वाक्यस्याग्नीषोमीयपशुव्यतिरिक्तविषयत्वाद्गवादिव्यतिरिक्त-

विषयत्वप्रसंगाच्च ॥ तथा च सामान्यतस्त्रिंशत्तिथिषूक्तप्रकारेण पूर्वभागे पूर्वमासस्यांतर्भावात् पूर्वमासप्रयुक्तक्षयाहवर्धापनश्राद्धोत्सवादिकं कार्यं ॥ उत्तरभागे उत्तरमासप्रयुक्तमेतत्सर्वमिति निष्कर्षः ॥ वर्धापनं नाम प्रतिसंवत्सरे जन्मदिने पुरुषस्य क्रियमाणमभ्यंगादिकं महाराष्ट्रदेशे प्रसिद्धं ॥ एवं मार्गशीर्षप्रयुक्ताष्टकाश्राद्धदर्शश्राद्धादीनि मार्गशीर्षकृष्णपक्षसप्तम्यादितिथित्रयामावास्यापूर्वार्धभागे कृत्वा पुनः स्नात्वा पुनः पाकवैश्वदेवादिकं कृत्वा सप्तम्यादित्रयामावास्योत्तरार्धभागे पौषप्रयुक्तान्यष्टकामावास्याश्राद्धानि पुनः कार्याणि॥प्रामाण्याग्रहे दीपिकावचनानि उपलक्षणपरत्वेनोदाहरणपरत्वेन वा योज्यानि॥तथा च कालनिर्णयदीपिकायामपि ॥ नष्टानां क्षयमासगासु तिथिषु प्रागंत्ययोरर्धयोर्ग्राह्या-

स्तास्तिथयः क्षयाहविषये प्रागूर्ध्वमासस्थिता इति ॥ अस्यार्थः ॥ नष्टानां मृतानां क्षयाहविषये प्रतिसांवत्सरिकश्राद्धविषये वर्धापनादौ च क्षयमासगासु तिथिषु द्विसंक्रांतियुक्तमासस्थासु तिथिषु प्रतिपदादिषु प्रागंत्ययोरर्धयोः पूर्वार्ध उत्तरार्धे च प्रागूर्ध्वमासाभ्यां स्थितास्तिथयः पूर्वमासि स्थिता उत्तरमासि स्थिताश्च ग्राह्या ज्ञेया इति ॥ क्षयमासस्य प्रतिपदादिपूर्वार्धे भागे पूर्वमासस्थितप्रतिपदादिनिमित्तकश्राद्धादितिथित्वं क्षयमासस्य प्रतिपदाद्युत्तरार्धभागे द्वितीयमासस्थप्रतिपदादिनिमित्तकश्राद्धादितिथित्वं ज्ञेयमिति भावः ॥ ननु क्षयमासस्य यस्मिन्मासे न संक्रांतिः संक्रांतिद्वयमेव वा ॥ मलमासः स विज्ञेयो मासे त्रिंशत्तमे भवेदिति काठकगृह्यवचनेन मलमासत्वं॥ तत्र वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि ॥ मलमासस्य यत्कार्यं

तद्व्याघ्रवचनं यथेति सत्यव्रतवचनेन मलमासे श्राद्धस्य निंदितत्वेन क्षयमासे मासद्वयनिमित्तकश्राद्धस्य कथं कर्तव्यतेति चेन्न ॥ एक एव यदा मासः संक्रांतिद्वयसंयुतः ॥ मासद्वयगतं श्राद्धं मलमासेऽपि शस्यत इति सत्यतपसो वचनात् ॥ यत्तु बृहस्पतिः यस्मिन्मासे न संक्रांतिः संक्रांतिद्वयमेव वा ॥ संसर्पांहस्पती मासावधिमासश्च निंदिता इति ॥ क्षयमासात्पूर्वाधिकमासः संसर्पनामकः ॥ क्षयमासस्त्वंहस्पतिनामकः अधिमासः क्षयमासात्परो मासः एवं त्रयो निंदिताः शोभनादाविति शेषः ॥ तद्विवरणं विवाहयज्ञोत्सवेत्यादौ कृतं ॥ वटेश्वरसिद्धांते तु प्रकारांतरमुक्तं ॥ यदि न चलति वै मासयुग्मं न चिंत्यमिति ॥ अस्यार्थः ॥ ज्योतिःशास्त्रे द्विसंस्था । क्वचित्पूर्वत्र चलनसंस्कारोऽस्तीत्युक्तं ॥ तथा च यदाचलनमस्ति तदा पूर्वस्यासंक्रांतस्य

ससंक्रांतत्वसंपादनादयं क्षयमास एकत्वेनैव परिगणनीयः॥ न तु मा-
सद्वयात्मकत्वेन। यदा तु चलनं नास्ति तदा तथोक्तप्रकारेण मासद्व-
यात्मकत्वं दृष्टमिति॥ अत्रायं विशेषः॥ एकस्मिन्नेव वर्षे तु द्वौ मा-
सावधिमासजौ॥ प्राकृतस्तत्र पूर्वः स्यादुत्तरस्तु मलिम्लुच इति जा-
बाल्युक्तेः॥ अस्यार्थः॥ तत्र तयोरधिकमासयोर्मध्ये पूर्वाधिमासः
प्राकृतः॥ न मलिम्लुच इति॥ तथा च इष्टयादि सर्वं काम्यं तु मल-
मासे विवर्जयेदित्युक्तनिषेधः पूर्वाधिमासे नास्ति॥ अधिमा-
सात्पूर्वमासोक्तकर्मसमाप्तिस्तु पूर्वाधिमासे न किंतु निजमास
एव। निजमासस्य मुख्यत्वात्॥ पूर्वस्याधिकमासत्वेन गौणत्वात्
अनेनैव न्यायेनोत्तरमासोक्तकर्मारंभोऽपि निजमास एव॥ तथाच
यस्मिन्वर्षे आश्वयुजोऽधिमासः चैत्रश्चाधिमासः तत्र चैत्रस्य मलि-

म्लुचवेत्न अधिकाश्वयुजस्य मलमासत्वेन इष्ट्यादिकाम्यकर्मान-
र्हत्वेऽपि मुख्याश्वयुजत्वाभावेन भाद्रपदशुक्लैकादश्यारब्धदुग्धव्र-
तसमाप्त्ययोग्यत्वेन दुग्धव्रतसमाप्तिस्तु निजाश्वयुजशुक्लैकादश्या-
मेव कार्या ॥ तत्रैव द्विदलव्रतारंभं कुर्यात्। एवं कार्तिकस्नाननवरा-
त्रविजयादशमीदीपावल्यादिकमपि निजमास एव ॥ यत्तु चैत्रादौ
नाधिमास इति ॥ तथा स्मृत्यंतरे ॥ घटकन्यागते सूर्ये वृश्चिके
वाथ धन्विनि ॥ मकरे वापि कुंभे वा नाधिमासो विधीयते ॥ इति
शब्दोक्ततुलासहितषण्मासेष्वधिकमासनिषेधकथनं क्षयमासाभावे
ज्ञेयं पूर्वं क्षयमासपूर्वोत्तरभागमासत्रयमध्ये अधिकमासद्वयोक्तेः ॥
क्षयमासस्य च कार्तिकादित्रय एवोक्तेश्च ॥ यदापि पूर्वमासिकक-
र्माणि पूर्वपक्षे प्रकल्पयेत् ॥ उत्तरे मासि कर्माणि कृष्णपक्षे प्र-

कल्पयेदिति वचनं । अस्यार्थः ॥ पूर्वपक्षे तिथिपूर्वभागे कृष्णपक्षश-
ब्दस्य मासोत्तरभागार्थत्वात् ॥ लक्षणया तिथ्युत्तरभागार्थकत्वं ब-
हुवाक्यानुरोधाज्ज्ञेयं ॥ क्षयमास इति शेषः ॥ एवं आमध्यान्हात्पूर्व-
मासकर्तव्यं कर्म कारयेत् ॥ मध्यान्हानंतरं कुर्यादुत्तरे मासि चो-
दितमित्यत्रापि मध्यान्हशब्दः लक्षणया तिथेः पूर्वभागपरः बहुवा-
क्यानुरोधात् ॥ अतएव ज्योतिर्निबंधेऽपि ॥ तिथ्यर्धे प्रथमे पूर्वः प-
रस्मिन्नुत्तरस्तथा ॥ मासाविति बुधैश्चिंत्यौ क्षयमासस्य मध्यगा-
विति ॥ एवमन्यत्रापि ॥ स्पष्टार्कसंक्रांतिविहीनयुक्तो यः सोधिमासः
क्षयमासकस्तु ॥ द्विःसंक्रमस्तत्र विभागयोस्तु तिथेर्हि मासः प्रथ-
मांत्यसंज्ञाविति ॥ वस्तुतस्तु तत्पूर्वमास्यानीति आमध्यान्हात्पूर्वमा-
सेति वाक्यद्वयं बहुदृष्टमाधवादिभिरलिखितत्वान्निर्मूलं ॥ अतएवास्य

प्राकृतत्वं ॥ स्वापेक्षया पूर्वमासे प्रकृतस्यारब्धकर्मणोऽर्हत्वात् ॥ इदमेव संसर्पत्वं च ॥ प्रकृतकर्मण्यस्य मासस्य संसर्पणात् गमनात्तत्कर्मकरणार्हत्वादिति यावत् ॥ इदमेवाभिप्रेत्य ज्योतिःपितामह आह॥ मासः कन्यागते भानौ असंक्रांतो भवेद्यदि॥ दैवं पित्र्यं तदा कर्म तुलास्थे कर्तुरक्षयादिति ॥ यत्त्वत्र माधवेन व्याख्यातं ॥ अत्र कन्यागते सवितरि योऽसंक्रांतः असौ मलिम्लुचः आश्वयुजः भाद्रपदांते कन्याप्रवेशात् ॥ एवं सति कन्यामुपजीव्य यद्विहितं दैवं पित्र्यं च तन्मलिम्लुचे आश्वयुजे न कर्तव्यं ॥ किं तर्हि तुलासंक्रांत्युपेते शुद्धाश्वयुजे इति तत्र दैवपित्र्योः कन्यामुपजीव्येति यद्विशेषणमुक्तं तदयुक्तं ॥ अस्मिन्प्रमाणे तद्ज्ञापकाभावात् । दैवकर्मणः कन्यासंक्रांत्याश्रयणेन कुत्राप्यनुक्तेश्च ॥ महालयाख्यपि-

त्रकर्मणस्तु कन्याश्रयणेऽपि कन्योपजीव्यत्वस्य स्वेनैव निराकृतत्वात् ॥ आषाढीमवधिं कृत्वा यः स्यात्पक्षस्तु पंचमः ॥ श्राद्धकालः स विज्ञेयः कन्यां गच्छतु वा नवेति जातूकर्ण्यवचनात् ॥ मासः कन्यागते भानाविति वाक्येऽपि पित्र्यस्याक्षयमिति विशेषणं भवति ॥ तेन कन्यागते भानावाश्वयुजमासेऽपि श्राद्धकर्तुः स्वल्पफलमिति सूच्यते ॥ दैवमित्यस्याक्षयमिति विशेषणं न भवति ॥ तथा च व्यासः ॥ षष्टिभिर्दिवसैर्मासः कथितो बादरायणैः ॥ उत्तरे देवकार्याणि पितृकार्याणि चोभयोरिति ॥ गालवोऽपि ॥ वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि ॥ मासद्वयेऽपि तत्कुर्याद्व्याघ्रस्य वचनं यथेति ॥ यत्तु सत्यव्रतः ॥ वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि ॥ मलमासे न कर्तव्यं व्याघ्रस्य वचनं यथेति ॥ वर्षे वर्षे तु

यच्छ्राद्धं मृताहनि मलिम्लुचे ॥ कुर्यात्तत्र प्रमीतानामन्येषामुत्तरत्र चेति ॥ तद्वचनं क्षयमासात्पूर्वभाव्यधिकमासातिरिक्ताधिकमास-विषयं ॥ अस्य प्राकृतत्वोक्त्या सफलत्वसूचनात् ॥ अन्यस्य म-लिम्लुचत्वोक्त्या निष्फलत्वोक्तेः ॥ क्षयमासात्पूर्वभाव्यधिकमासे-प्यपिंडकं कार्यं ॥ पिंडवर्जमसंक्रांतौ संक्रांतौ पिण्डसंयुतमिति वचनात् ॥ अथ मलमासे कार्याकार्यनिर्णयः ॥ कालादर्शे सं-गृह्योक्तः ॥ द्वादशाहसपिंडांतकर्मग्रहणजन्मनोः ॥ सीमंते पुं-सवे श्राद्धं द्वावेतौ जातकर्म च ॥ रोगशांतिरलभ्ये च नित्यश्रा-द्धं व्रतानि च ॥ प्रायश्चित्तं निमित्तस्य दर्शात्पूर्वं परत्र च ॥ अ-ब्दोदकुंभमन्वादिमहालययुगादिषु ॥ श्राद्धं दर्शेऽप्यहरहः श्राद्धमू-नादिमासिकं ॥ मलिम्लुचान्यमासेषु मृतानां श्राद्धमाब्दिकं ॥ श्रा-

द्वं तु पूर्वदृष्टेषु तिथिष्वेव युगादिषु ॥ मन्वादिषु च यद्दानं दानं दैनं
दिनं च यत् ॥ तिलगोभूहिरण्यानां संध्योपासनयोः क्रिया ॥ एवं
होमश्चाग्रयणं स्वाग्नेरिष्टिश्च पर्वणोः॥नित्याग्निहोत्रहोमश्च देवताति-
थिपूजनं ॥ स्नानं च स्नानविधिना अभक्ष्यापेयवर्जनं ॥ तर्पणं च नि-
मित्तस्य नित्यत्वादुभयत्र चेति मासद्वये कर्तव्यसंग्रहः॥अनित्यमनि-
मित्तं च दानं च महदादिकं॥अग्न्याधानाध्वरापूर्वतीर्थयात्रामरेक्षणं॥
देवालयतटाकादिप्रतिष्ठा मौंजिबंधनं ॥आश्रमस्वीकृतिः[1] काम्यवृषो-
त्सर्गश्च निष्क्रमः ॥ राजाभिषेकः प्रथमश्चूडाकर्म व्रतानि च । अ-
न्नप्राशनमारंभो गृहाणां च प्रवेशनं ॥ स्नानं विवाहो नामानि तथा-
पन्नमहोत्सवं ॥ व्रतारंभसमाप्ती च काम्याकाम्यं च पाप्मनः ॥ प्रा-

---

[1] स्वीकार इति पाठः ॥

यश्चित्तं तु सर्वस्य मलमासे विवर्जयेदिति वर्ज्यसंग्रहः ॥ उपाकर्मो-त्सर्जनं च पवित्रदमनार्पणं ॥ अवरोहश्च हैमंतः सर्पाणां बलिरष्टकः ॥ ईशानस्य बलिर्विष्णोः शयनं परिवर्तनं ॥ दुर्गेंद्रस्थापनोत्थाने ध्वजोत्थानं च वज्रिणः ॥ पूर्वत्र प्रतिषिद्धानि परत्रान्यच्च दैविकमित्यनेन मलमासे वर्जितानां शुद्धमासे कर्तव्यत्वेन संग्रहः ॥ अत्र सर्वत्र साक्षिवचनानि माधवकालनिर्णये द्रष्टव्यानि ॥ अधिकमासात्पूर्वमारब्धं चांद्रायणादिकं तत्र समापनीयमेव ॥ त्रिंशद्दिनात्मकत्वात् ॥ यत्तु शाकव्रतादिकं तत्तु मासद्वये कार्यं । आरंभसमाप्त्योः शुद्धमासे विहितत्वेन तन्मध्येऽधिकमासस्य पतितत्वात् ॥ आगंतुकं शनिवारोपवासादिकं तत्रैव संकल्पितं तत्र कार्यमेव ॥ तथा च नित्यं नैमित्तकं स्नानं औपासनग्रहणस्नानादिकं जातक-

र्मादिकं च कालांतरे कर्तुं नावकाशं ॥ आधानादिकं तु मलमासे न कार्यं ॥ श्राद्धं तु अन्यमासमृतानां त्रयोदशो मासः मलमासश्चे-न्मलमासे प्रथमदिने तत्रैव तस्मिन्द्वादशे मास्यतीतेऽनंतरदिने प्रथ-माब्दिकं कार्यं ॥ मध्ये मलमासश्चेत्त्रयोदशमासानंतरं स्वीये मासि कार्यं ॥ प्रतिसांवत्सरिकश्राद्धं तु अन्यमासमृतानां त्रयोदशं मल-मासं विहाय चतुर्दशे शुद्धे मासि कार्यं ॥ मलमासमृतानां तु का-लांतरे तस्मिन्नेव मलमासश्चेत्तदा मलमास एव प्रतिसांवत्सरिकं कार्यं चतुर्दशे मास्यपीति ॥ मासस्य द्वौ पक्षौ शुक्लः कृष्णश्च ॥ दैवे-कर्मणि शुक्लो मुख्यः पित्र्ये कर्मणि कृष्णः पक्षः ॥ एकैकपक्षस्य प्रतिपदादयः पूर्णिमांता अमावास्यांता वा पंचदश तिथयः ॥ स्व-रूपेणैव कलावशिष्टस्य चंद्रस्याग्न्यादिभिः पीयमानाः पंचदश

कलाः प्रतिपदादिशब्देनोच्यंते ॥ कृष्णपक्षेऽग्न्यादिभिः कलाः पीयंते ताः कला अब्ध्यादिभिः शुक्लपक्षे चंद्रे पूर्यंते ॥ ताश्च प्रतिपदादिशब्देनोच्यंते ॥ तिथिः द्विविधा ॥ शुद्धविद्धभेदात् ॥ अन्यतिथिसंबंधरहिताशुद्धा ॥ अन्यसंबंधोपेता विद्धा ॥ सापि द्विविधा ॥ पूर्वविद्धा परविद्धा चेति ॥ तत्रोदये पूर्वया तिथ्या त्रिमुहूर्तयुक्ता पूर्वविद्धा ॥ सायंकाले परतिथ्या त्रिमूहूर्तयुक्ता परविद्धा । दिवसस्य प्रातःसंगवमध्यान्हापराण्हसायान्हरूपेण पंचधा भेदो द्रष्टव्यः ॥ अयं तु वेधः देवांतरोपवासैकभक्तनक्तायाचितव्रतेषु बोध्यः ॥ अवांतरभेद एतेषां प्रायोऽनुष्टानाभावान्नोच्यते ॥ ॥ अथ श्राद्धकालनिर्णयः ॥ ॥ श्राद्धं द्विविधं ॥ एकोद्दिष्टं पार्वणं चेति तत्रैकोद्दिष्टे मध्यान्हव्यापिनी तिथिर्ग्राह्या ॥ तत्रैकदेशव्याप्तौ यत्राधिका व्या-

प्तिः सा ग्राह्या ॥ समव्याप्तौ तूत्तरतिथिक्षये पूर्वतिथिः ॥ वृद्धौ तूत्तरा ॥ एकोद्दिष्टं नाम एकं पुत्रभ्रात्रादिकमुद्दिश्य क्रियमाणं प्रतिसांवत्सरिकादि श्राद्धं ॥ तथाऽपरपक्षचतुर्दश्यां शस्त्रादिभिर्मृतपित्रादीनां क्रियमाणं च ॥ पार्वणं तु पित्रादित्रयं मात्रादित्रयं मातामहादित्रयं मातामह्यादित्रयमुद्दिश्य क्रियमाणं श्राद्धं ॥ तच्च पार्वणं दर्शश्राद्धप्रतिसांवत्सरिकश्राद्धादिभेदेन द्वेधा ॥ मृताहं यो न जानाति मासं वापि कथंचन ॥ तेन कार्यममायां तु श्राद्धं माघेऽथ मार्गके ॥ द्वादश्यादितिथिष्वपि कार्यं ॥ तत्र दर्शश्राद्धनिर्णयः ॥ दर्शश्राद्धविधिं त्रिधास्थितदिनांत्यांशेऽपराह्ने चरेदितिकालनिर्णयदीपिकोक्तेः ॥ अयं निर्णयः अपराण्हव्यापी दर्शश्राद्धविधिः साग्निकानां ॥ निरग्निकानां तु कुतुपकालव्यापी दर्शो ग्राह्यः ॥ दि-

नद्वये कुतुपे सत्वे समस्तकुतुपव्यापी ग्राह्यः ॥ दिनद्वये कुतुपाभावे पूर्वः ॥ दिनद्वयेऽपि स्वल्पकुतुपसंबंधे वृद्धिसाम्ययोरुत्तरः ॥ क्षये पूर्वः ॥ यत्स्वल्पं दिवसद्वयेऽपि कुतुपं गच्छेत्तदाप्युत्तरो ग्राह्यः ॥ वृद्धिसमत्वस्था पूर्वाण्हीति कालनिर्णयः ॥ कात्यायनेनाप्युक्तं ॥ पिंडान्वाहार्यकं श्राद्धं क्षीणराजनि शस्यते ॥ वासरस्य तृतीयांशे नातिसंध्यासमीपत इति ॥ क्षीणराजनि अमावास्यायामित्यर्थः ॥ दिवसं पूर्वाण्हमध्याह्नापराण्हभेदेन त्रिभागं कृत्वाऽपराण्हव्यापिन्यमावास्या ग्राह्या ॥ अथवा दर्शे पंचकालपक्षवाक्यानां बहुत्वात्पिंडान्वाहार्यकमिति कात्यायनवचनस्य काण्वमात्रपरत्वसंभवात् काण्वव्यतिरिक्तसर्वशाखिनां पंचमकालपक्षेणैव दर्शकालनिर्णयो ज्ञेयः ॥ अतः सर्वेषाममावास्यायामपि पंचकालपक्षेणैवापराण्हनिर्णयः ॥

अस्मिन्वाक्ये वासरस्य तृतीयांश इति अपराण्हैकदेशसहितसा-
यान्हकाले काण्वानां कुतुपकालस्याऽवश्यकत्वाऽभावविवक्षया श्रा-
द्धकर्तव्यताविधानात् ॥ अमावास्यायास्तृतीयभागस्यापराण्हका-
लस्य ज्ञापकाभावः ॥ अतएव नातिसंध्यासमीपत इति पिंडान्वाहा-
र्यकश्राद्धस्यातिसंध्यासमीपकाले कर्तव्यतोक्ता ॥ एवमपराण्हसंबं-
धेनाऽमा निर्णेया ॥ भूतविद्धाप्यमावास्या प्रतिपन्मिश्रिताऽपि वा ॥
पित्र्ये कर्मणि विद्वद्भिर्ग्राह्या कुतुपकालिकीति हारीतोक्तौ भूतविद्धा-
प्यमावास्या इत्ययमंशस्तु यदा पूर्वदिने चतुर्दशी चतुर्दशऽघ-
टिका द्वितीयदिनेऽमावास्या विंशतिघटिका तदा ॥ भूतविद्धाम-
मावास्यां मोहादज्ञानतोऽपि वा ॥ श्राद्धकर्मणि ये कुर्युस्तेषामायुः
प्रहीयते ॥ इति निषेधप्राप्तौ पूर्वदिनग्राह्यत्वमात्रपरः ॥ निषेधवा-

क्यं तु चतुर्दश्यां कुतुपकालव्याप्तित्वाभावे ज्ञेयं ॥ उभयत्र कुतुपका-
लव्याप्तित्वे तु परदिनेऽपराण्हस्पर्शाभावे पूर्वा ॥ अपराण्हे पितॄणां
तु यापराण्हानुयायिनी ॥ सा ग्राह्या पितृकार्येषु इत्युक्तेः पूर्वदिने
ऽपराण्हसंबंधात् ॥ एवमेतद्वाक्यबलादेव यदा चतुर्दशी विंशतिघटि-
का परदिनेऽमावास्या चतुर्दशघटिका तदाऽपि पूर्वैवेति सिद्धं भव-
ति ॥ अस्मिन्पक्षे भूतविद्धाममावास्यामिति निषेधस्तुन॥ प्रतिपद्य-
प्यमावास्या पूर्वाण्हव्यापिनी यदि ॥ भूतविद्धैव सा ग्राह्या पित्र्ये-
कर्मणि सर्वदेति विशेषवचनात् ॥ उभयत्र कुतुपकालव्याप्तित्वे
ऽप्यपराण्हसंबंधेऽल्पत्वमहत्त्वाभ्यां निर्णयः॥ अल्पापराण्हे त्याज्या
मा ग्राह्या स्यात्त्वधिका भवेदिति विशेषवचनात् ॥ उभयत्र संपूर्ण-
साम्ये एकदेशसाम्ये वा जाबालिराह ॥ अपराण्हद्वयव्यापी यदि

दर्शस्तिथिक्षये ॥ आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्मतेति ॥ दृष्टेंद्वमा सिनीवाली याऽदृष्टेंदुकला कुहूरिति ॥ उत्तरत्र निरग्न्यादेरित्युक्तेः ॥ आहिताग्निशब्देन साग्निको ग्राह्यः ॥ ग्राह्या कुतुपकालिकीत्यत्र कुतुपशब्देनान्होऽष्टममुहूर्तो मुख्यः ॥ नारदः ॥ सप्तमात्परतो यस्तु नवमात्पूर्वतः स्थितः ॥ उभयोरपि मध्यस्थः कुतुपः स उदाहृत इति ॥ तथा ॥ प्रविश्य भानुः स्वं स्थानं शंकुवद्यत्र तिष्ठति ॥ स कालः कुतुपो नाम मंदीभूतस्य संज्ञया ॥ मत्स्यपुराणे च ॥ अन्हो मुहूर्ता विख्याता दशपंच च सर्वदा ॥ तत्राष्टमो मुहूर्तो यः स कालः कुतुपः स्मृतः ॥ कुतुपेन सहचरितमुत्तरमुहूर्तद्वयमपि कुतुपशब्देनोक्तमापस्तंबेन ॥ कुतुपाद्यान्मुहूर्तांस्त्रीन्यदा चरति भास्करः ॥ स कालः कुतुपस्तत्र पितॄणां दत्तमक्षयमिति ॥ तथा ना-

रदोऽपि॥ मध्यान्हात्त्रिमुहूर्तं तु यदा चलति भास्करः ॥ स कालः कुतुपो नाम पितॄणां दत्तमक्षयमिति ॥ संपूर्णसाम्ये तु परैव ॥ कुतुपकालव्याप्तेराधिक्यात् ॥ यदा तु परदिने मध्यान्हमध्य एवामावास्या पूर्वदिने मध्यान्हानंतरमेवाऽमावास्या तदा परैवेति ज्ञापयितुं प्रतिपन्मिश्रितैवेत्युक्तं ॥ पूर्वदिनेऽपराण्हव्यापित्वेऽप्यमावास्यायां कुतुपस्य प्राधान्यात्परदिने कुतुपकालव्याप्तेः॥ तथा च जाबालिः॥ पूर्वाण्हे चेदमावास्या नापराण्हे भवेद्यदि ॥ प्रतिपद्यपि कर्तव्यं श्राद्धं श्राद्धविदो विदुरिति ॥ ॥ अथ प्रतिपत्सावत्सरिकश्राद्धनिर्णयः॥ ॥ व्याप्तास्ते द्व्यहगापराण्हसमये नास्त्येव सामा यदि ग्राह्या पूर्वदिने क्षयो यदि तिथेर्वृद्धौ तु साम्ये परा ॥ या तुल्या द्व्यहगापराण्हलवयुग्ह्रासादिकं चोत्तरेति कालनि-

र्णये ॥ अथ मतांतरम् ॥ सायंतन्यपरत्र चेन्मृततिथिः सैवाब्दिके मासिके ग्राह्या सा ह्यपराण्हयोर्यदि तदा यत्राधिका सा मता ॥ तुल्या चेदुभयापराण्हसमये पूर्वा न चेत्तद्वये पूर्वैव त्रिमुहूर्तगास्तसमये नो चेत्परैवोचिता॥दिवसं प्रातःसंगवमध्यान्हापराण्हसायान्हभेदेन पंचधा विभजेत् ॥ तत्र सूर्योदयमारभ्यासायान्हं मृततिथिः स्पृशेच्चेत्सा तिथिः पार्वणश्राद्धे उत्तमा ॥ तदभावेऽपराण्हव्याप्ता ॥ तदभावेऽपि दिनद्वयमध्ये यत्राधिकाऽपराण्हैकदेशव्याप्तिः सा ग्राह्या॥ एकदेशव्याप्तिसाम्ये संपूर्णव्याप्तिसाम्ये मृततिथ्यपेक्षयोत्तरतिथिक्षये पूर्वविद्धा मृततिथिर्ग्राह्या ॥ वृद्धौ तूत्तरविद्धा ॥ एवं दिनद्वये मृततिथेरपराण्हेस्पर्शाभावेऽपि क्षये पूर्वविद्धा ॥ वृद्धौ तूत्तरविद्धा मृततिथिर्ग्राह्या ॥ मृताहस्य तिथिर्या तु चापराण्हद्वये यदि ॥ पूर्वा क्ष-

ये तु कर्तव्या वृद्धौ कार्या तथोत्तरा ॥ ॥ अथ मन्वादयश्चतुर्दश ॥ ॥ चैत्रशुक्लतृतीया पूर्णिमा च ॥२॥ ज्येष्ठे पूर्णिमा ॥३॥ आषाढे शुक्लदशमी पूर्णिमा च ॥ ५ ॥ श्रावणे कृष्णाष्टमी ॥ ६ ॥ भाद्रपदे शुक्लतृतीया ॥७॥ आश्वयुजे शुक्लनवमी ॥८॥ कार्तिके शुक्लद्वादशी पूर्णिमा च ॥ १० ॥ पौषे शुक्लैकादशी ॥ ११ ॥ माघे शुक्लसप्तमी ॥ १२ ॥ फाल्गुने पूर्णिमाऽमावास्या च ॥ १४ ॥ युगादयश्चत्वारः ॥ वैशाखे शुक्लतृतीया ॥ १ ॥ भाद्रपदे कृष्णत्रयोदशी ॥२॥ कार्तिके शुक्लनवमी ॥ ३ ॥ माघे पूर्णिमा ॥४॥ अथ शुक्लपक्षे द्वादश मन्वादयः त्रयो युगादयः ॥ एते दैवे पित्र्ये च कर्मणि पूर्वाण्हव्यापिनो ग्राह्याः ॥ उर्वरितमन्वादिद्वयमेकं च युगादि एतत्त्रयं कृष्णपक्षस्थत्वादपराण्हव्यापि ग्राह्यं ॥ पूर्वाण्हे तु सदा कार्या शु-

क्षामनुयुगादयः ॥ दैवे कर्मणि पित्र्ये च कृष्णे चैवापराण्हिकीति पा-
द्मोक्तेः ॥ यत्तु द्वे शुक्ले द्वे च कृष्णे तु युगादी कवयो विदुः ॥ शुक्ले
पौर्वाण्हिकी ग्राह्या कृष्णे चैवापराण्हिकीति नारदीयवचनं ॥ दर्शे
तु माघमासस्य प्रवृत्तं द्वापरं युगमिति भविष्यत्पर्ववचनोक्तरीत्या
युगादिद्वयस्य कृष्णपक्षस्थत्वाभिप्रायेण प्रवृत्तमिति बोध्यं॥ ॥ अथ
संक्रातयो द्वादश॥ ॥ तत्र मेषतुलयोः पूर्वोत्तरभागयोर्दश घटिकाः
पर्वकालः ॥ कर्काटके पूर्वभाग एव त्रिंशद्घटिकाः ॥ मकरसंक्रांतौ
परभाग एव चत्वारिंशद्घटिकाः ॥ त्रिंशत्कर्काटके नाड्यो मकरे तु
दशाधिका इति वचनात् ॥ वृषभसिंहवृश्चिककुंभेषु पूर्वभागे उत्तर-
भागे च षोडश घटिकाः मिथुनकन्याधनुर्मीनेषु पराः षोडश घटि-
काः पर्वकालः ॥ अयं निर्णयः दिवा संक्रांतौ सत्यां ॥ रात्रौ तु वि-

शेषः ॥ तत्र कर्काटकेऽस्तमयादारभ्य सूर्योदयपर्यंतं यस्मिन्कस्मिंश्चित्कालविशेषे संक्रमे सति पूर्वदिवस एव स्नानदानादिकं न तु रात्रौ परदिने वा ॥ मिथुनात्कर्कसंक्रांतिर्यदा स्यादंशुमालिनः ॥ प्रभाते वा निशीथे वा कुर्यादहनि पूर्वत इति भविष्योत्तरपुराणे॥ अर्धरात्रे तदूर्ध्वं वा संक्रमे दक्षिणायने ॥ पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः ॥ इति च ॥ यावन्नोदयते रविरित्यस्य तदूर्ध्वं वेत्येतदनंतरमन्वयः ॥ मकरे तु सूर्यास्तमयादूर्ध्वं रात्रौ यस्मिन्कस्मिंश्चित्कालविशेषे सूर्योदयपर्यंतं मकरसंक्रमः तदा परदिने सूर्योदयादनंतरमेव पर्वकालः ॥ न रात्रौ ॥ न पूर्वदिने । कार्मुकं तु परित्यज्य झषं संक्रमते रविः ॥ प्रदोषे वार्धरात्रे वा स्नानं दानं परेऽहनीति ॥ भविष्योत्तरे ॥ वृद्धगार्ग्योऽपि ॥ यदास्तमयवेलायां

मकरं याति भास्करः॥ प्रदोषे वार्धरात्रे वा स्नानं दानं परेऽहनीति॥
कर्काटकमकरसंक्रांतिव्यतिरिक्तदशसंक्रमेषु रात्रौ जातेषु तु त्रेधा
पर्वकालः॥ रात्रौ द्वितीययामांत्यघटिका तृतीययामाद्यघटिका च।
एवं मिलित्वा घटिकाद्वयमर्धरात्रः॥ ततः पूर्वभागे सूर्यास्तमया-
वधि मेषादिसंक्रमेषु पूर्वदिने मध्यादस्तमयपर्यंतं पर्वकालः॥
अर्धरात्रात्परतः संक्रमेषु तु परदिने सूर्योदयान्मध्यान्हपर्यंतं पर्व-
कालः॥ घटिकाद्वयरूपार्धरात्रमध्ये मेषादिसंक्रमेषु तु पूर्वोत्तरदिन-
योस्तावत्कालं पर्वकालः॥ तदाह वृद्धवसिष्ठः॥ अन्हि संक्रमणे
पुण्यमहः कृत्स्नं प्रकीर्तितं॥ रात्रौ संक्रमणे भानोर्दिनार्धं स्नान-
दानयोः॥ अर्धरात्रादधस्तस्मिन्मध्यान्हस्योपरि क्रिया॥ ऊर्ध्वं सं-
क्रमणेषूर्ध्वमुदयात्प्रहरद्वयं॥ पूर्णे चेदर्धरात्रे तु यदा संक्रमते रविः॥

प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटाविति ॥ अन्हि संक्रांतिर्यदा भवति तदा कृत्स्नस्यान्हः पुण्यत्वं विदधताऽनेन वचनेनार्धरात्रे स्नानदानादिकं प्रतिषिद्ध्यते ॥ एवंसत्युदयानंतरक्षणभाविकर्काटके पूर्वभागे प्राशस्त्यं बाधित्वोत्तरभागेऽनुष्ठानं भवति॥ अस्तमयप्राचीनक्षणभाविनि मकरे चोत्तरभागप्राशस्त्यं परित्यज्य पूर्वभागेऽनुष्ठानं कर्तव्यं॥कर्काटकमकरयोः पूर्वोत्तरभागप्राशस्त्यवचनं तु मध्यान्हादिसंक्रमविषयं ॥ ननु राहुदर्शनसंक्रांतिविवाहात्ययवृद्धिषु ॥ स्नानदानादिकं कार्यं निशि काम्यव्रतेषु चेति याज्ञवल्क्यस्मृतौ संक्रांतौ रात्रावपि स्नानदानयोरुक्तत्वेन मकरकर्काटकयोः रात्रावपि स्नानदानप्राप्तेः वृद्धवसिष्ठेन सामान्यतः संक्रमेषु रात्रौ प्राप्तेषु पर्वकालविशेषमुक्त्वा मकरकर्कटयोः पर्युदस्त-

त्वेन याज्ञवल्क्यवचनस्य तयोरेव प्राप्तेः ॥ अनेनैवाशयेन माधवेन मकरे कर्कटे रात्रावप्याचारादनुष्ठितिरित्युक्तमिति चेत्सत्यं ॥ मिथुनात्कर्कसंक्रांतिः कार्मुकं तु परित्यज्येत्येतयोर्वाक्ययोः कर्कटकमकरौ स्फुटं गृहीत्वाऽन्हि स्नानदानयोर्विधानात्प्राबल्यं ॥ राहुदर्शनसंक्रांतीत्यत्र तु पर्युदासेन कर्कटकमकरयोरनुमीयमानत्वेनास्यवाक्यस्य दुर्बलत्वेन रात्रौ स्नानदानयोरनुष्ठानासंभवात् ॥ यथौदुंबरी सर्वा वेष्टयितव्येति स्मृत्यनुमितश्रुतेः औदुंबरीं स्पृष्ट्वोद्गायेदिति स्पष्टश्रुत्यपेक्षया दौर्बल्यं ॥ अतएव कुमारस्मृत्यनुसारेणौदुंबर्याः सर्ववेष्टनं न कार्यमित्युक्तं ॥ तथात्रापि विशेषवचनानुसारेणान्ह्येव स्नानदानादिकं कार्यं ॥ राहुदर्शनसंक्रांतीत्यादिवचनं तु देशांतरविषयं युगांतरविषयं वा ॥ अथवा राहुदर्शन-

स्य संक्रांतिः संबंधः प्रत्यक्षेण राहुदर्शनप्राप्तिरिति यावत् ॥ तस्यां निशि स्नानं न तु एकांगुलाद्यनुमानिकग्रहणज्ञाने ॥ एवं ग्रहणोद्वाहसंक्रांतियात्रार्तिप्रसवेषु च ॥ श्रवणे चेतिहासस्य रात्रौ दानं प्रशस्यत इत्यत्रापि उद्वाहसंक्रांतिर्विवाहसंबंधः तस्मिन्निति एकपदत्वेनार्थो बोध्यः ॥ ननु मिथुनात्कर्कसंक्रांतिरिति वाक्ये रात्राविस्येव वक्तव्ये प्रभाते वा निशीथे वेति रात्रिविशेषग्रहणं किमर्थं तथा कार्मुकं तु परित्यज्येत्यत्रापि रात्राविति विहाय प्रदोषे वार्धरात्रे वेति ग्रहणं व्यर्थमिति चेत् ॥ शृणु ॥ भविष्योत्तरपुराणे सामान्यतोऽर्धरात्रात्पूर्वभागे संक्रमणे पूर्वदिवसे प्रहरद्वयं पर्वकालमुक्त्वोर्ध्वसंक्रमणे तु परदिने प्रहरद्वयं पर्वकालमुक्त्वा मकरकर्कटाविति मकरकर्कटयोः पर्युदासे कृते मकरकर्कट-

योरेवावस्थायां कथं पर्वकाल इत्याशंक्य कर्कटकस्य परतः संक्रमेऽपि परदिने पर्वकालं व्यावर्तयितुं प्रभाते इति रात्र्यवधिरुक्तः ॥ निशीथग्रहणं तु दिनद्वयेऽपि पर्वकालं व्यावर्तयितुं ॥ तथा मकरेऽपि अर्धरात्रात्पूर्वं संक्रमे पूर्वदिने पर्वकालव्यावृत्त्यर्थं प्रदोषेऽवधिरुक्तः ॥ अर्धरात्रग्रहणं तूभयत्र पर्वकालव्यावृत्त्यर्थं ॥ तथाचायं निष्कृष्टार्थः ॥ कर्कटे प्रहरचतुष्टयात्मिकायां रात्रौ यदाकदापि संक्रमे पूर्वदिन एव पर्वकालः ॥ अर्धरात्रात्पूर्वभागानुक्तिस्तत्सिद्धत्वात् ॥ एवं मकरे रात्रौ यदाकदापि संक्रमे परदिन एव पर्वकालः ॥ अर्धरात्रात्परदिनानुक्तिस्तु मकरे परभागे पर्वकालस्य सिद्धत्वादिति दिवा संक्रांतौ संक्रांतिसामीप्यक्रमेणोत्तररात्रौ तारतम्यं ज्ञेयं ॥ रात्रौ त्वर्धरात्रात्पूर्वं मेषादिसंक्रमे दिवास्तमयसामीप्य-

क्रमेणोत्तमलादिपर्वकालो ज्ञेयः॥ अर्धरात्रात्परतश्चेत्सूर्योदयसामी-
प्यक्रमेण ज्ञेयं अर्धरात्रसंक्रमे तूभयत्र ज्ञेयं ॥ ॥ अथ ग्रह-
णनिर्णयः ॥ ॥ चंद्रग्रहणे ग्रहणप्रहरक्षणात्पूर्वं प्रहरत्रयं न भुं-
जीत ॥ सूर्यग्रहणे तु यामचतुष्टयं ॥ चंद्रस्य ग्रस्तोदये तु संपूर्ण-
महर्न भुंजीत ग्रस्तास्तमये तु रात्रौ चंद्रोदये सति दृष्ट्वा दिवा
स्नात्वा भुंजीत ॥ पूर्वरात्रौ चंद्रग्रहे सार्धप्रहरमध्ये मोक्षश्चेद्रा-
हुमुक्तचंद्रं दृष्ट्वा स्नात्वा तांबूलादिकं गृण्हीयात् ॥ राहुस्पर्शारंभ-
काले स्नायात् ॥ ग्रस्ते जपहोमादिकं कुर्यात् ॥ मुच्यमाने दान-
श्राद्धादिकं कुर्यात् ॥ प्रथमयामग्रहणे तु अहर्भोजनं न कार्यं ॥
मुक्तौ स्नानं विना तांबूलादिचर्वणनिद्रादिकं न कार्यं ॥ एवं सूर्य-
ग्रहणेऽपि ॥ जातसूतकमृतसूतकिनां तु यावद्ग्रहणं सूतकाभावा-

त्तावत्पर्यंतं जपाद्यधिकारः ॥ रजस्वलानां तु नद्यादितीराद्बहिरु-
द्धृतोदकेन शूर्पादिना स्नानं ॥ ग्रस्तास्तमानसूर्यग्रहे तु अहोरात्रमु-
पवसेत् । मंत्रसिद्धिकामः यतिश्च पुत्ररहिता स्त्री च ग्रहणद्वयेऽप्यु-
पवसेत् ॥ तथाऽयनद्वये विषुवद्द्वय उपवसेत् ॥ अयनद्वयं मकरकर्क-
टौ ॥ विषुवद्द्वयं तुलामेषौ । स्त्रीपुंसयोः पुत्रवत्त्वे तु नोपवासः ॥ स-
र्वग्रासे उपवास इत्यत्र प्रथमयामग्रहणे अहर्भोजनं न कार्यमित्य-
त्र च मूलप्रमाणं चिंत्यं ॥ अयं भोजननियमो बालवृद्धातुरान्वि-
ना बोध्यः॥ तेषां तु ग्रहणक्षणापेक्षया द्वादशघटिकायाः पूर्वभागे भो-
जनं कर्तुं शक्यं ॥ तन्मध्ये भोजनं न ॥ तथा च स्मृतिः ॥ अपराण्हे
न मध्यान्हे मध्यान्हे न तु संगवे ॥ भुंजीत संगवे चेत्स्यान्न पूर्वं
भुजिमाचरेत् ॥ सूर्यग्रहण इति शेषः ॥ न मध्यान्ह इत्यस्य भुंजीत

इत्यनेनान्वयः ॥ चेत्स्यादित्यस्यापराण्हे मध्यान्हे इत्येताभ्याम-न्वयः॥ ॥अथाष्टकाः॥ ॥भाद्रपदमार्गशीर्षपौषमाघफाल्गुनेषु पं-चमासेषु कृष्णपक्षस्थाऽष्टम्योऽष्टका इत्युच्यंते॥ताः अपराण्हव्या-पिन्यो ग्राह्याः॥ ततः पूर्वाः सप्तम्यस्ततः परा नवम्यश्चाष्टम्यनुसा-रेण ग्राह्याः ॥ तत्रापराण्हनियमो नास्ति ॥ नवम्यस्त्वन्वष्टकसं-ज्ञाश्च ॥ पंचमासेषु सप्तम्यादितिस्त्रोऽष्टका इत्युच्यंते ॥ श्रीमद्भा-गवतसप्तमस्कंधतात्पर्ये तु चतस्त्रोष्टका इत्युच्यंते ॥ सप्तम्यादित्रयं चैव तथाचैव त्रयोदशी॥ चतस्त्रस्त्वष्टकाः प्रोक्ता इति व्यासस्मृतेः॥ ॥ अथ प्रतिपदादिसामान्यतिथिनिर्णयः॥ ॥ स्नानदानादा-वुदयव्यापिन्यः ॥ यां तिथिं समनुप्राप्य चोदयं याति भास्करः ॥ सा तिथिः सकला ज्ञेया स्नानदानादिकर्मसु इत्युक्तेः ॥ दंतधावन-

स्त्रीसंगादौ कर्मकालव्यापिनी तिथिर्ग्राह्या ॥ अनध्याये तु ॥ वृद्धौ साम्ये क्षये चोषस्त्रिचतुःपंचनाडिकाः ॥ षट्चतुस्तिसृभिः सायमनध्यायः प्रकीर्तित इत्युक्तेः ॥ तिथिवृद्धौ प्रतिपदष्टम्योः परदिने प्रातःकाले घटिकात्रयावस्थितौ तद्दिनस्यानध्यायत्वं ॥ साम्ये तु चतुर्घटिकावस्थाने क्षये पंचघटिकावस्थाने ज्ञेयं ॥ तथा चतुर्दश्यष्टम्योः पूर्वदिने प्रवेशे तु तिथिवृद्धौ सायंकालात्पूर्वं षड्घटिकाप्रवेशे पूर्वदिनस्यानध्यायत्वं ॥ साम्ये तु चतस्रो घटिकाः प्रवेशे क्षये च तिस्रो घटिकाः प्रवेशे पूर्वदिनस्यानध्यायत्वं स्मृत्यर्थः ॥ ॥ प्रदोषे तु । चतुर्थी सप्तमी चैव त्रयोदश्यस्तमानतः ॥ प्रदोषमपि कुर्वीत द्व्येकार्धघटिकाक्रमादित्युक्तेः ॥ चतुर्थी अस्तमयात्पूर्वं घटिकाद्वयकाले गता चेत्तदा प्रदोषः ॥ तदपेक्षयाधि-

ककाले गता चेन्नप्रदोषः। न्यूनकाले गताचेत्प्रदोषः सिद्ध एव॥ एवं सप्तम्यामेकघटिकाकाले प्रदोषत्वं॥ तथा त्रयोदश्यामर्धघटिकाकाले प्रदोषत्वं ज्ञातव्यमिति स्मृत्यर्थः॥ एवं षष्ठी च द्वादशी चैवार्धरात्रोननाडिका॥ प्रदोषमपि कुर्वीत तृतीया नवनाडिकेत्यस्याप्यर्थो बोध्यः॥ तृतीया नवनाडिकेत्यतः परं रात्राविति शेषः॥ तथा युगादिमन्वाद्यनध्यायात्पूर्वदिने रात्रौ वेदवेदांताद्यध्ययने प्रदोषः॥ अनध्यायास्तु। प्रतिमासे शुक्लपक्षे कृष्णपक्षे च चतुर्दश्यादित्रयमष्टमी च। मन्वादयो युगादयोऽष्टका अन्वष्टकाः। मेषतुलौ मकरकर्कटकौ। तथा आषाढकार्तिकफाल्गुनेषु कृष्णपक्षद्वितीया बोध्याः॥ भाद्रपदकृष्णपक्षे प्रेतद्वितीया महाभरणी च पितृमातृश्राद्धदिनं संध्यागर्जनदिनं॥ इति सामान्यतिथिनिर्ण-

यः ॥ विशेषतिथिनिर्णयस्तु ॥ ॥ चैत्रमासः ॥ ॥ चैत्रशुक्लप्रतिप-
दुदयव्यापिनी ग्राह्या ॥ तत्रसंवत्सरादित्वादवश्यमभ्यंगादिकं का-
र्यं ॥ अकरणे प्रत्यवायोक्तेः ॥ वत्सरादौ वसंतादौ बलिराज्ये तथैव
च ॥ तैलाभ्यंगमकुर्वाणो नरकं प्रतिपद्यते । इति वृद्धवसिष्ठोक्तेः ॥
दिनद्वये तदव्याप्तावव्याप्तौ वा पूर्वैव ॥ चैत्रमासेऽधिकमासप्राप्तौ
तु मलमास एव प्रतिपद्यभ्यंजनादिकं कृत्वा पंचांगस्थराजमं-
त्र्यादिफलं श्रोतव्यं ॥ तथा च जोतिःशास्त्रे ॥ संवत्सरे चात्र वसंत-
संज्ञके ऋतौ मलाख्यश्च तदन्यसंज्ञकः ॥ मासो भवेत्तत्र शुभेप्सु-
भिर्नरैः श्रोतव्यमाद्ये नृपमंत्रिसत्फलमिति ॥ अस्यार्थः ॥ तदन्यसं-
ज्ञकः मलान्यनिजचैत्रनामकः ॥ तत्र तयोर्मध्ये आद्ये मलमासे ॥
चैत्रशुक्लद्वितीया श्रीमद्वेदव्यासस्वामिनां पुण्यतिथिः ॥ सा तु पू-

वर्षिण्हिकी ग्राह्या ॥ तृतीया मन्वादिः ॥ तस्यां सशंकरगौरीं पूजयेत् ॥ सा उदये मुहूर्तमात्रापि ग्राह्या तदभावे पूर्वविद्धा ॥ इयमेव मत्स्यजयंती ॥ चैत्रशुक्लनवमी रामनवमी ॥ सा मध्यान्हव्यापिनी ग्राह्या ॥ पुनर्वसुयुता चेद्विशेषफलदा ॥ तस्यां नोपवसेत् ॥ सर्वासां तु जयंतीनां श्रेष्ठा कृष्णाष्टमी मता ॥ तस्मात्संनिहिताऽत्यंतं तत्रैवोपवसेन्नरः ॥ सर्वास्वपि जयंतीषु पूजा कार्या विशेषत इति भरद्वाजसंहितायां ॥ कृष्णजयंतीव्यतिरिक्तासूपवासनिषेधात् ॥ विष्णुपंचके तु पंचोपवासाः ॥ शुक्लकृष्णैकादश्योः सूर्योदये चतुर्दशीवेधरहितप्रहरव्यापिन्यां पौर्णमास्यां प्रहरद्वयव्यापिन्युत्तराषाढावेधरहितश्रवणे चतुर्दशीवेधरहितसूर्योदयस्पर्शि दर्शे चेति ॥ उदयद्वयस्पर्शि श्रवणे नोपवासः ॥ इयं कवींद्रतीर्थानां पु-

ण्यतिथिः॥ दशम्यां तु वैशाखस्नानारंभः॥ एतत्प्रसंगात्सर्वदशम्या-
दितिथित्रयनिर्णयः क्रियते॥ दशमीविद्धैकादशी नोपोष्या॥ सूर्यो-
दयादधश्चोर्ध्वं द्वादशी दृश्यते यदि॥ तस्य प्राक्पादमात्रे तु नाश्नी-
याद्धरिवासरे॥ वेधो द्विविधः॥ सूर्योदयवेधः अरुणोदयवेधश्चेति॥
तत्र पूर्वा स्मार्तैर्नोपोष्या॥ तथा एकादशीवृद्धौ सूर्योदये वेधाभा-
वेऽपि सा नोपोष्या॥ वैष्णवानां तु अरुणोदयकाले एकादश्यां
दशमीकलादिसंबंधे सति दशमीविद्धत्वात्तस्यां नोपवासः॥ अ-
रुणोदयकालस्तु। चतस्रो घटिकाः प्रातररुणोदय उच्यते।
उदयात्प्राग्यदा विप्रा मुहूर्तद्वयसंयुतेत्यादिवचनात्सूर्योदयात्प्रा-
ग्घटिकाचतुष्टयकालः॥ सोधिकश्च ग्राह्यः॥ दक्षिणायने रा-
त्रिमानस्याधिक्याद्घटिकाचतुष्टयादधिकं तथा च मुहूर्तद्वयं भवती-

ति ॥ अतो विद्याधीशस्वाम्यनुज्ञया । पंचपंचाशद्धटिका पंचाश-
त्पलसंयुता दशमी चेत्सैकादशी विद्धा ॥ तदपेक्षयैकपलन्यूना
चेन्न विद्धा ॥ इदं दशम्यादित्रयमार्यभट्टानुसारेण ज्ञेयं॥ सर्वधर्मेषु
कः श्रेयान्विष्णुधर्मेषु योऽधिकः ॥ इति स्मृतेः ॥ अस्यार्थः ॥ कः
ब्रह्मपक्षः अनध्यायादिनिर्णयेषु श्रेयान् ग्राह्य इत्यर्थः ॥ विष्णु-
धर्मेषु दशम्यादित्रयविष्णुपंचकजन्माष्टम्यादिषु योऽधिकः पक्षः
आर्यभट्टसिद्धांते श्रेयानित्यर्थः ॥ ब्रह्मसौराऽऽर्यसिद्धांतेषु त्रिष्वा-
र्यसिद्धांतस्याधिक्यात् ॥ इदं त्वार्यभट्टशास्त्ररीत्या गणकसत्वे ज्ञे-
यं ॥ गणकाभावे आर्यभट्टपंचांगानुसारेण दशम्यादिदिनत्रयं
ग्राह्यं ॥ तदभावे तु सौरपक्षपंचांगे एकादश्यादीनां दशम्याद्यपे-
क्षया पंचषड्घटिकादिरूपातिवृद्धौ सत्यां द्विपंचाशद्धटिका दशमी

।किंचिदधिका ।किंचिन्न्यूना चेत्तदाऽऽर्यभट्टरीत्या पंचाशत्त्वं भविष्य-
तीत्यनुमायैकादश्या दशमीवेधो ज्ञेयः॥ तथा घटिकाद्वयवृद्धौ
त्र्यधिकपंचाशद्घटिका दशमी चेत्तदा एकादश्या वेधो ज्ञेयः॥ सा-
म्ये च क्षये वा चतुःपंचाशद्घटिका किंचिन्न्यूना वा चेत्तदा दशमीवेधः
एवं द्वादश्यामपि सौरपक्षस्य पंचांगदृष्टघटिकास्वतिवृद्धौ घटिका-
चतुष्टयं स्वल्पवृद्धौ घटिकात्रयं॥ उत्तरतिथ्यपेक्षया साम्ये क्षये
वा घटिकाद्वयं संयोज्य साधनद्वादशी ज्ञेया॥ ॥अथ श्रवणद्वाद-
शी॥ ॥श्रवणद्वादशीयोगो मध्यान्हादूर्ध्वमप्यणु॥ उत्तराषाढर-
हिता उपवासो विधीयते॥इति वचनात्तत्तत्कालिकदिनमानानुसा-
रेण मध्यान्हक्षणापेक्षया परत उदयकाले उत्तराषाढसंबंधरहि-
तश्रवणेन द्वादश्या योगश्चेत्तदा श्रवणद्वादश्युपवासः॥ उदय-

द्वयश्रवणसत्त्वे किंचिन्न्यूने वा श्रवणद्वादश्युपवासोऽस्त्येव ॥ एकोनषष्टिघटिका तथा त्रिंशत्पलाधिका ॥ श्रोणा च पौर्णमासी च नोपोष्या विष्णुतत्परैरिति वचनं तु न श्रवणद्वादशीविषयं ॥ किंतु विष्णुपंचककेवलश्रवणोपवासविषयं ॥ केवलश्रवणग्रहणात्पौर्णमासीसाहचर्याच्च ॥ उदयस्पार्शिनी दर्श पूर्णिमा या तु यामिका ॥ मध्यान्हव्यापिनी श्रोणा वोपोष्या विष्णुतत्परैः ॥

॥ अतिरिक्तोपवासनिर्णयः ॥

॥ दशमीवेधहीना तु परतो द्वादशी यदि ॥ उपवासद्वयं कार्यमन्यथा निरयं व्रजेदिति वचनात् ॥ एकदश्या दशमीवेधाभावे सति द्वादश्यां षष्टिघटिकायां च सत्यां परदिने पुनः स्वल्पमात्रद्वादश्युर्वरिता चेत्तदोपवासद्वयं कार्यं ॥ कला वा घटिका वा स्यात्परतो द्वादशी यदि ॥ द्वादश

द्वादशीर्हंति परेद्युः पारणे कृते ॥ इति कृष्णामृतमहार्णवे ॥ द्वादश्यामतिरिक्तायां यो नोपोष्यात्सुमंदधीः ॥ द्वादश द्वादशीर्हंति द्वादशी चातिलंघिता ॥ इति च कृष्णामृतमहार्णवे ॥ अतिरिक्ता द्वादश्युपवासाकरणे साधनद्वादशीमध्ये भोजनाकरणे च द्वादशसंख्याकद्वादशीषु यत्फलमुक्तं तन्नाश उक्तः ॥ साधनद्वादश्यां प्राप्तायां ततः पूर्वरात्रेर्भागत्रयं कृत्वा तृतीयभागे प्रातःस्नानं कृत्वा प्रातःसंध्यावंदनार्घ्यं दत्वाऽर्घ्यानंतरं ब्रह्मयज्ञं देवर्षिपितृतर्पणं च कृत्वा सूर्योदयात्पूर्वमेव जपौपासनमाध्यान्हिकसंध्यादिकं सर्वं कृत्वा सूर्योदयानंतरं सूर्यं दृष्ट्वा द्वादशीमध्य एव पारणं कार्यं ॥ अतएव आपस्तंबवेदे ब्रह्मयज्ञकालो महारात्र उपसीत्युक्तः ॥ स्वल्पद्वादशीव्यतिरिक्तदिवसे महारात्रोपसोर्ब्रह्मय-

ज्ञकालत्यागप्रसक्तेः॥ तथा द्वादशीं श्रवणोपेतां यो नोपोष्यात्सुमंद-
धीः॥ पंचसंवत्सरकृतं पुण्यं तस्य विनश्यतीति तत्रैव पापाधि-
क्योक्तेः ॥ अतिरिक्तद्वादश्यपेक्षया श्रवणद्वादश्यधिका ॥ श्र-
वणद्वादश्यपेक्षयैकादशी तु महाधिका ॥ वरं स्वमातृगमनं
वरं गोमांसभक्षणं । वरं हत्या सुरापानमेकादश्यन्नभोजनात् ॥
इत्यादिभिरेकादश्यां भोजने महाप्रत्यवायोक्तेः ॥ ॥ अथ
हरिवासरः ॥ ॥ एकादश्याः प्रांतभागो द्वादश्याः पूर्वमेव च ॥
हरिवासरो विज्ञेयस्तत्र भुक्तिर्हि दोषकृदिति वचनस्यायमर्थः ॥
यदा दशमीविद्धैकादशी भवति तदा तद्दशम्यामरुणोदये वि-
द्यमानैकादशी सूर्योदयानंतरं विद्यमानैकादशी च मिलित्वा या-
वत्यो घटिका जायंते तासां भागचतुष्टयं कृत्वा तत्र चतुर्थे भागे

भोजनौपासनतर्पणादिकं न कार्यं ॥ तथा एकादश्यां रात्रि-
शेषे यावद्धटिका द्वादशी वर्तते उदयानंतरं च यावद्धटिका द्वाद-
शी तदुभयं मिलित्वा भागचतुष्टयं कृत्वा प्रथमभागे यावत्यो घटि-
का एकादशीरात्रौ गतास्ता विहाय सूर्योदयानंतरमुर्वरितघटि-
कासु तर्पणोपासनभोजनानि न कार्याणि ॥ एवमेकादशीश्रव-
णद्वादश्यतिरिक्तद्वादशीकृष्णजन्माष्टमीनां हरिप्रियदिनत्वेन ह-
रिदिनशब्दवाच्यत्वात्तत्र श्राद्धतर्पणौपासनादीनि न कार्याणि ॥
तथा चोक्तं ॥ ॥ मैत्रावरुणोपनिषदि ॥ अथेदानीं ज्ञानोपसर्गा रा-
जन् मोहजालस्यैते वै योनिरित्युक्त्वा कांश्चिदज्ञानोपसर्गानुक्त्वा
अथ ये चान्ये व्रतविलोपिनो विकर्मस्था हरिदिने ह वै नित्यनैमि-
त्तकादिश्राद्धहोमतर्पणादिकारिण इत्यादीनां तत्त्वज्ञानोपसर्गेषु मौं-

जीव्रतादिलोपवेदादिविरुद्धकर्मस्थत्वादिनैकादश्यादौ श्राद्धाधिका-
रित्वादीनां समानत्वेन परिगणितत्वात् ॥ श्रुतिवाक्यार्थस्त्वयं ॥ अ-
थ ज्ञानोपसर्गाः । अथ तत्त्वज्ञानोपदेशानंतरं तत्त्वज्ञानविघ्नकारिण
उच्यंते ॥ हे राजन् एते वक्ष्यमाणाः मोहजालस्य मिथ्याज्ञानस-
मूहस्य योनिः कारणं भवंतीति शेषः ॥ अथ ये चान्ये पुरुषा व्रत-
लोपिन एकादशीव्रतमौंजीव्रतादिनाशकाः विकर्मस्थाः वेदादि-
निषिद्धकर्मनिष्ठाः ह वै अतिप्रसिद्धे हरिदिने एकादश्यादौ नित्य-
श्राद्धकरणे प्रत्यवायोपेतं मातापित्रोः प्रतिसांवत्सरिकादि श्राद्धं
नैमित्तिकं संक्रांतिव्यतीपातादिकादाचित्कनैमित्तिकश्राद्धं ॥ आदि-
शब्देन काम्यश्राद्धं ॥ नित्यहोमः औपासनाग्निहोत्रादिः नैमित्तिकः
संक्रांत्यादिनिमित्तहोमः ॥ काम्यः रोगपरिहारादिनिमित्तकः ॥ तथा

नित्यतर्पणं ब्रह्मयज्ञानंतरं क्रियमाणं नैमित्तिकं संक्रांत्यादिनिमि-
त्तकं काम्यतर्पणं पुरश्चरणादिनिमित्तकं ॥ आदिशब्दाच्छ्राद्धभो-
जनादिकं एतत्कारिण इत्येतेषां ज्ञानोपसर्गत्वं नाम तादृशेषु तत्त्व-
ज्ञानं नोपपद्यते ॥ उत्पन्नं च न तिष्ठतीत्यर्थः॥ एवं दशमीद्वादशी-
हरिवासरकालस्यापि हरिदिनत्वात्तत्र पितृतर्पणादिहोमश्राद्धाद्य-
करणे इदमेव प्रमाणं ॥ नन्वेवं चेत्संवत्सरमध्ये चतुर्विंशत्येकादशी-
षु कृष्णाष्टम्यां चौपासनाहुत्यभावात् क्वचिच्छ्रवणद्वादश्यां कदा-
चित्त्वतिरिक्तद्वादश्यां चौपासनाहुत्यभावात् ऐतरेयब्राह्मणोक्त-
संवत्सरीयाग्निहोत्राहुतिसंख्याविलोपः प्रसज्यते ॥ तथा च पंच-
मपंचिकायामुक्तं ॥ तस्य वा एतस्याग्निहोत्रस्य सप्त च शतानि
विंशतिश्च संवत्सरे सायमाहुतयः सप्त वा एव शतानि विंशतिश्च

संवत्सरे प्रातराहुतय इति ॥ तथा च संवत्सरमध्ये पंचविंशतिदि-
नेषु होमाभावे शताहुतिलोपाच्छ्रवणद्वादश्यादि प्राप्तौ अधिका-
हुतिविलोपाच्च ब्राह्मणविरोधः प्रसज्यते इति चेन्न ॥ ब्राह्मणे संव-
त्सरग्रहणेन सावनसंवत्सरस्य विवक्षितत्वाद्बार्हस्पत्यादि संवत्सरा-
णामभावात् ॥ तथाहि ॥ बार्हस्पत्यवत्सरे बृहस्पतेर्वक्रातिचाराभ्यां
कदाचित्त्रयोदशमासाः कदाचिदेकादश मासा भवंतीति षष्ट्युत्तर-
शतत्रयदिवसानामभावात्सौराब्दे पंचषष्ट्युत्तरशतत्रयदिनानां
भावात् ॥ चांद्राब्दे पंचपंचाशदुत्तरशतत्रयदिनानांभावात् ॥
नाक्षत्राब्दे तु चतुर्विंशत्युत्तरशतत्रयदिनानां भावात् ॥ षष्ट्युत्तर-
शतत्रयदिनानामभावात् ॥ तद्दिनासायंप्रातर्विंशत्यधिकसप्तशताहु
तीनामसंभवात् ॥ सावनसंवत्सरे तु अनियतत्रिंशद्दिनानां मासत्वे-

न तादृशद्वादशमासानां वत्सरत्वेन तत्रैव षष्ट्युत्तरशतत्रयदिनानां संभवेन श्रुत्युक्ताहुतिसंख्यापूर्तेस्तस्यैव ग्राह्यत्वात् ॥ तत्र च निषिद्धैकादश्यादिपरित्यागोऽप्यनिषिद्धषष्ट्युत्तरशतत्रयदिनानां सावनसंवत्सरत्वेन विवक्षितत्वात् ॥ तत्र श्रुत्युक्ताहुतिसंख्यायाः संभवात् ॥ एकादशीहोमकरणेऽपि विवाहदिनमारभ्य पुनर्द्वितीयवत्सरतद्दिनपर्यंतं षष्ट्युत्तरशतत्रयदिवसा नहि भवंति ॥ अतोऽनियतषष्ट्युत्तरशतत्रयदिवसा एकादश्यादिहोमिभिरपि संवत्सरत्वेन ग्राह्या एव ॥ तद्विना श्रुत्युक्ताहुतिसंख्यापूर्तेरभावात् ॥ एवं पक्षद्वयसाम्येऽप्येकादश्यादिहोमकरणे मैत्रावरुणोपनिषद्विरोधात् तद्विनाऽपिश्रुत्युक्ताहुतिसंख्यापूर्तेः संभवादैतरेयब्राह्मणविरोधाभावात् ॥ एकादश्यां न होम इति स्थितं ॥ केचिच्छ्रौताहुतिसंख्यापू-

र्थ्यर्थं दशम्यां सायंकाले समस्यहोमं कृत्वा द्वादश्यां प्रातःकाले एकादशीसायमाहुतिहोमं कुर्वंति ॥ तद्व्यर्थं । अप्रामाणिकं च ॥ द्वादश्यां प्रातराहुतिषट्कहोमविषयेऽपि प्रमाणं नेत्यलं ॥ उक्तप्रकारेण संख्यापूर्तेः संभवात् ॥ अग्रेतनतिथौ अतीताहुतिहोमे अतीततिथौ अग्रेतनपक्षहोमविशेषहोमे समस्यहोमादाविव प्रमाणादर्शनात् ॥ ॥ एकादश्यादौ प्रसक्तं श्राद्धं तु पारणदिने कार्यं ॥ ॥ सूतकादौ यथा श्राद्धं सूतकांते विधीयते ॥ तथैवैकादशीश्राद्धं द्वादश्यामेव कारयेत् ॥ इति वचनात्तन्न्यायेन श्रवणद्वादश्यतिरिक्तद्वादशीजन्माष्टमीषु श्राद्धमकृत्वा पारणदिन एव कार्यं ॥ पुष्यशुक्लैकादश्यां प्रसक्तं मन्वादिश्राद्धं तु दशमीवेधे सति एकादश्यां ज्ञेयं ॥ नित्यतर्पणं तु आसु तिथिषु औपासनवल्लुप्य-

त एव ॥ अत्रसर्वत्र प्रमाणवाक्यानि स्मृतिकौस्तुभेऽस्मत्पितृ-
चरणकृतस्मृतिसंग्रहे च ज्ञेयानि ॥ हारीतस्मृतौ ॥ पित्रोः श्राद्धं
न कुर्वीत नोपवासदिने क्वचिदिति ॥ नोपवासदिने इत्येतत्तु श्र-
वणद्वादश्यतिरिक्तद्वादशीजन्माष्टमीनां संग्रहार्थं ॥ दत्तात्रेयसंहि-
तायां च॥ एकादश्यां यदा ब्रह्मन्ब्राह्मणा म्रियते यदि॥ मंत्रतः सक-
लं कार्यं पुत्रैस्तस्यौर्ध्वदेहिकं ॥ प्रेताहुतिर्न होतव्या न पिंडं न तिलां-
जलिं ॥ द्वादश्यां सकलं कार्यं विधिरेष सनातनः ॥ यथाहिता-
ग्निर्विप्रः स्यान्नाग्नौ होमं समाचरेत् ॥ नैवं तु कर्मलोपः स्याद्विधि-
रेष सनातन इति ॥ नन्वेतस्याः स्मृतेः सायंप्रातरग्निहोत्रं जुहु-
यादिति श्रुऽतिविरोधेनाप्रामाण्यं ॥ अस्यां श्रुतौ सायंकाले प्रातः-
काले च जीवनवतोऽग्निहोत्रविधानात् ॥ एकादश्यां होमाभावे

तद्विरोधापत्तेः ॥ यथा औदुंबर्याः सर्वावेष्टनस्मृतेः औदुंबरीस्पर्शविधायकश्रुतिविरोधेनाप्रामाण्यं तथेति चेन्न ॥ वैषम्यात् ॥ अत्र सामान्यतः सायंकाले प्रातःकाले च अग्निहोत्रविधानेन विशेषेण एकादश्यादिहोमनिषेधेन बाधसंभवात् ॥ उत्सर्गापवादन्यायात् ॥ औदुंबरीशाखायाः सर्वावेष्टनस्पर्शयोरसंभवेन तत्र स्मृतेरप्रामाण्यस्यावश्यमंगीकार्यत्वात् ॥ नच सामान्यश्रुतेरप्यपौरुषेयत्वेन प्राबल्यात्कथं पौरुषेयस्मृत्या बाध इति वाच्यं ॥ न हिंस्यात्सर्वाणि भूतानीति श्रुतेः जातकर्मादिसंस्कारेषु समिच्चरुहोमविधायकस्मृत्या बाधदर्शनात् ॥ अन्यथा समिदाहरणादीनां हिंसात्मकत्वेन स्मृत्या श्रुतेः बाधानंगीकारे गर्भाधानादिस्मार्तकर्मविलोपप्रसंगात् ॥ ॥ अथ दशम्यां संकल्पः ॥ ॥ दशमीदि-

वसे प्राप्ते व्रतस्थोऽहं जनार्दन ॥ त्रिदिनं देवदेवेश निर्विघ्नं कुरु
केशव ॥ एकादश्यां निराहारः स्थित्वाहमपरे दिने ॥ भोक्ष्यामि
पुंडरीकाक्ष शरणं मे भवाच्युत ॥ अज्ञानतिमिरांधस्य व्रतेनाने-
न केशव ॥ प्रसीद सुमुखो देव ज्ञानदृष्टिप्रदो भवेति ॥ दशम्यां
नियमाः॥ शाकं तैलं दिवा स्वापं पुनर्भोजनमैथुने॥ उष्णोदकात्यंबु-
पानं दशम्यां वैष्णवस्त्यजेत् ॥ एकादशीनियमाः ॥ असकृज्जलपानं
च दिवास्वापं च मैथुनं ॥ तांबूलं तुलसीभक्षमेकादश्यां विवर्जयेत् ॥
द्वादशानियमाः ॥ शाकं मधु परान्नं च पुनर्भोजनमैथुने ॥ चणकं
च दिवास्वापं तांबूलं तिलपिष्टकं ॥ कांस्यं तैलं पुनर्भुक्तं वर्जयेद्वा-
दशीदिने ॥ इतिस्मृत्यंतरे ॥ ॥ अथोपवासप्रसंगात्कृष्णाष्टमी-
निर्णीयते ॥ ॥ सा च श्रावणमासे कृष्णपक्षेऽष्टम्यर्धरात्रव्या-

पिनी ग्राह्या ॥ दिनद्वयेऽर्धरात्रव्याप्तावव्याप्तौ वा परैवोपोष्या ॥
इयमेव रोहिणीयुक्ता चेज्जयंतीत्युच्यते ॥ इयमेव बुधवारेण सोम-
वारेण वा युता चेद्विशेषफलप्रदा ॥ उभयत्रार्धरात्रव्याप्त्यव्याप्ति-
पक्षे यत्र रोहिण्यादियोगाः सोपोष्या ॥ उभयत्र रोहिणीयोगे परै-
वोपोष्या ॥ सऋक्षापि न कर्तव्या सप्तमीसंयुताष्टमी ॥ अविद्धायां
सऋक्षायां जातो देवकिनंदन इति ब्रह्मवैवर्तोक्तेः ॥ कार्या विद्धापि
सप्तम्या रोहिणीसहिताष्टमीति तु द्वितीयदिने रोहिणीयोगाभावे
ज्ञेयं ॥ अत्राऽऽर्यभट्टशास्त्रेणैव ज्योतिर्विद्भिरर्धरात्रादिवेधो ज्ञेयः ॥
विष्णुधर्मेषु योधिक इत्युक्तेः ॥ अर्धरात्रव्याप्त्यव्याप्तिपक्षे परदिन
उपवासस्तु कर्मकाले व्याप्तेः सत्वात् प्रदोषव्याप्तेर्ग्राह्यत्वोक्तेश्च ॥
अत्र श्रीमदाचार्यैरुपवासदिने कर्माण्युक्तानि ॥ प्रातःकाले दंतधा-

वनादिकं कृत्वा प्रातर्मध्यान्हसायंकालेषु योगायेति मंत्रेणैव स्नानं कृत्वा रात्रौ कृष्णस्य देवक्या अंके उपविष्टस्य स्तनं पिबत एकस्मिंस्तने हस्तं स्थापयित्वा मुखं पश्यतः यज्ञायेति षोडशोपचारपूजां कृत्वा बलभद्रदेवकीवसुदेवनंदयशोदासुभद्रारोहिणीनां कृष्णभुक्तशेषेण पूजां कृत्वा चंद्रोदयकाले कृष्णाग्रे पात्रं निधाय शंखोदकेन फलपुष्पादिसहितेन जातः कंसेति मंत्रेण कृष्णायार्घ्यं दत्वा बहिर्मंडलं कृत्वा चंद्राय क्षीरोदार्णवेति मंत्रेण अर्घ्यं दत्वा मृगिणे सितबिंबाय सोमदेवाय चेंदवे ॥ रोहिणीसक्तचिताय तारकाकापतये नम इति नमस्कारं कृत्वा अद्य स्थित्वेति मंत्रेण कृष्णाय व्रतं समर्प्य यथाशक्ति ब्राह्मणपूजां कृत्वा विश्वायेति मंत्रेण निद्रां कुर्यात् ॥ ततः परदिने सर्वायेति पारणं कृत्वा धर्मायेति मंत्रेण

स्वस्थो भवेत् ॥ इतरासु जयंतीषु विशेषपूजा कार्या ॥ सर्वासां तु जयंतीनां श्रेष्ठा कृष्णाष्टमी मता ॥ यस्मात्संनिहितात्यंतं तत्रैवो पवसेन्नरः ॥ सर्वास्वपि जयंतीषु पूजा कार्या विशेषतः ॥ सांनिध्य एव कर्तव्य उपवासो न दूरग इति भारद्वाजसंहितायां ॥ संनिहिता । अस्माकं कालेन समीपस्था । द्वापरांते कृष्णावतारस्य जातत्वात् रामादेर्व्यवहितत्वं ॥ पारणं तु ॥ रोहिण्यामर्धरात्रे तु यदा कृष्णाष्टमी भवेत् ॥ जयंतीनाम सा प्रोक्तेति श्रीमदाचार्यैः क्रियान्वयेन अष्टम्याः प्राधान्योक्तेः ॥ तथा तिथिरष्टगुणं हंति नक्षत्रं च चतुर्गुणं ॥ तस्मात्सर्वप्रयत्नेन तिथिभांते च पारणमिति स्मृतौ तिथिमध्ये पारणायां दोषाधिकोक्तेश्च तिथ्यंते पारणमावश्यकं ॥ रोहिण्यंतो दिवा चेत्तदंत एव पारणं ॥ रात्रौ चंद्रोदये रोहिण्यं-

तोऽष्टम्यंतो दिवा चेदष्टम्यंते तिथ्यंते पारणं न रोहिण्यंतप्रती-
क्षा कार्या ॥ एवमेव माधवेनाप्युक्तं ॥ याः काश्चित्तिथयः प्रोक्ताः
पुण्या नक्षत्रसंयुताः ॥ ऋक्षांते पारणं कुर्याद्विना श्रवणरोहिणी-
मिति रोहिण्याः पर्युदासात् ॥ एवमेव निर्णयामृतेनाप्युक्तं ॥
यत्तु माधवेन इदं वचनं केवलनक्षत्रोपवासविषयमित्युक्तं ॥ त-
दयुक्तं ॥ ॥ पूर्वार्धे तिथिनक्षत्रसांयोगिकव्रतस्योक्तत्वेन केवल
नक्षत्रोपवासप्रसक्त्यभावात् ॥ अन्यत्रापि । तिथ्यंते चोत्सवांते
वा व्रती कुर्वीत पारणमिति तिथ्यंतमात्रस्योक्तत्वात् ॥ उत्सवांत-
शब्देन द्वितीयदिने स्नानानंतरं कृष्णपूजानंतरकालो गृह्यते । न
त्वर्धरात्रे कृष्णपूजानंतरकालः ॥ अद्य स्थित्वा निराहारः श्वोभूते
परमेश्वर ॥ भोक्ष्यामि पुंडरीकाक्ष चास्मिंजन्माष्टमीव्रत इति

उपवासस्यसंकल्पितत्वात् उत्सवांते पारणं त्वशक्तविषयं ॥ तथा। यामत्रयादुपरि चेत्प्रातरेव हि पारणमित्यपि ॥ अष्टम्यंतः रात्रौ चेद्रात्रावेव पारणं ॥ कृष्णाष्टमीं प्रस्तुत्यानंतसंहितायामुक्तं ॥ भक्तानां वैष्णवानां च शुद्धानां नियतात्मनां ॥ विहिता सात्वताभिज्ञै रात्रावेव तु पारणेति ॥ यत्तु ब्रह्मवैवर्तेष्वपि ॥ सर्वेष्वेवोपवासेषु दिवापारणमिष्यते ॥ अन्यथा पुण्यहानिः स्याद्दतेधारणपारणमिति वचनं पूर्ववचनविरोधात् जन्माष्टमीव्यतिरिक्तविषयं ॥ प्रकृतमनुसरामः ॥ चैत्रीपूर्णिमा मन्वादिः ॥ चैत्रकृष्णद्वितीया विजयध्वजतीर्थस्वामिनां पुण्यतिथिः ॥ तृतीयावागीशतीर्थस्वामिनां पुण्यतिथिः ॥ अमावास्यायां तु गुडोदकपूर्णकरकोदकुंभव्यजनादिकं देयं ॥ इति चैत्रमासः ॥ ॥ अथ वैशाखमासः ॥

तत्र वैशाखशुक्लद्वितीया कूर्मजयंती ॥ शुक्लतृतीया अक्षयतृतीया॥
सा पूर्वाण्हव्यापिनी ग्राह्या ॥ कृष्णेचैवापराण्हिकीति स्मृतेः।
दिनद्वयेऽपि तद्व्याप्तौ अव्याप्तौ वा परैव ॥ रोहिणीबुधसोमवार-
युता चेद्विशेषतः पुण्यकालः ॥ इयमेवयुगादिः । विद्याधिराजती-
र्थानां पुण्यतिथिः ॥ परशुरामजयंती च ॥ षष्ठी तु रामचंद्रती-
र्थानां पुण्यतिथिः ॥ शुक्लसप्तम्यां गंगोत्पत्तिः ॥ तदुक्तं ब्राह्मे ॥
वैशाखशुक्लसप्तम्यां जन्हुना जान्हवी पुरा॥ क्रोधात्पीता पुनस्त्य-
क्ता कर्णरंध्रात्तु दक्षिणात् ॥ तां तत्र पूजयेद्देवीं गंगां गगनमेख-
लामिति ॥ वैशाखशुक्लद्वादश्यां योगविशेषः ॥ सिंहस्थे गुरौ भौ-
मे सति मेषे सूर्ये च सति द्वादश्यां हस्तनक्षत्रे व्यतीपाते च स-
ति पुरुषः गोभूहिरण्यवस्त्रदानेन स पापं त्यक्त्वा ऐहिकामुष्मि-

कफलविशेषं प्राप्नुयात् ॥ त्रयोदश्यां वेदव्यासजयंती ॥ चतुर्दश्यां श्रीनृसिंहजयंती सा प्रदोषव्यापिनी ग्राह्या ॥ दिनद्वये प्रदोषव्याप्तौ परैव ॥ इयमेव चतुर्दशी शनिवारस्वातीनक्षत्रसिद्धियोगवणिक्करणयुक्ता चेद्विशेषफदा ॥ वैशाखपौर्णमास्यां तु व्यासपूजा कार्या ॥ उदकुंभदध्योदनतिलपात्रव्यजनछत्रगुडोदकादिदानं कार्यं ॥ एवमेवाक्षयतृतीयायां द्वादश्यां च कार्यं ॥ शक्तौ सत्यां चैत्रपूर्णिमामारभ्य वैशाखपूर्णिमापर्यंतं कार्यं ॥ ॥ इति वैशाखमासः ॥ ॥ अथ ज्येष्ठमासः ॥ ॥ शुक्लप्रतिपदमारभ्य शुक्लदशमीपर्यंतं दशाहरनामका दिवसाः ॥ तेषु गंगापूजादिकं कार्यं ॥ तत्र दशम्यां योगविशेषः ॥ ज्येष्ठमासि सिते पक्षे दशम्यां बुधहस्तयोः ॥ गंगानंदे व्यतीपाते कन्याचंद्रे वृषे रवौ ॥ स्नान-

दानादिकं कुर्यान्मुच्यतेदशपातकैरिति स्कांदे ॥ तत्र शुक्लैकाद-
श्यां निर्जलमुपोष्य द्वादश्यां शर्करान्वितोदकुंभदाने महाफलं ॥
पौर्णमासी तु मन्वादिः ॥ अत्र वटसावित्रीव्रतं ॥ ज्येष्ठामावास्यायां
वा ॥ तद्विधानं निर्णयामृतादौ ज्ञेयं ॥ पौर्णमास्यां तिलदानमश्वमे-
धतुल्यफलकं ॥ विशेषयोगस्तु । सिंहे गुरुः शशी ज्येष्ठे प्राजापत्ये
रविस्तथा ॥ पूर्णिमा ज्येष्ठमासस्य महाज्येष्ठी प्रकीर्तितेति ज्यो-
तिःशास्त्रोक्तः ॥ प्राजापत्यं रोहिणी ॥ ज्येष्ठकृष्णतृतीया रघुवर्यती-
र्थानां पुण्यतिथिः ॥ एकादशी विद्यापतिस्वामिनां पुण्यतिथिः ॥
इति ज्येष्ठमासः ॥ ॥ अथाषाढमासः ॥ अत्र शुक्लदशमी पौ-
र्णमासी च मन्वादिः ॥ दशम्यां गोमयादिना गृहशुद्धिः ॥ वस्त्राणां
प्रक्षालनं ॥ जीर्णमृन्मयभांडविसर्जनं कार्यं ॥ एकादश्यां तु तप्त-

मुद्राधारणं ॥ चतुर्वर्णैश्चतुराश्रमैः पुरुषैः स्त्रीभिर्बालैश्च ग्राह्यं ॥ तत्र श्रुत्यादयः प्रमाणानि ॥ ऋक्सामयोः॥ चमूषच्छ्येनः शकुनो-विभृत्वागोविंदुर्द्रप्सआयुधानि बिभ्रत् ॥ अपामूर्मिं सचमानः स-मुद्रंतुरीयंधाममहिषोविवक्ति ॥ अस्या ऋचोऽर्थः ॥ यः अपां कर्मणां आपः अप इति वैदिकनिघंटौ कर्मनामसु पाठात् ॥ ऊर्मिं तरंगरूपं समुद्रं संसारसमुद्रं सचमानः प्राप्तः षच समवाय इति धातोः ॥ समवायः संबंधः ॥ अतएव श्येनः शकुनः श्येननामकप-क्षिविशेष इव ॥ चमूषत् चम्वां स्त्रीपुत्रादिरूपसेनायां सीदति श्रांतो भवतीति तथोक्तः ॥ षद्लृविशरणगत्यवसादनेष्विति धातोः कर्तरि क्विप् ॥ गोविंदुः गोभिर्वेदैर्विंद्यते विज्ञायते च विचार्यत इति वा ॥ तथोक्तः । विद्ज्ञाने विद्लृलाभे विदविचारणे इत्येभ्यः

कर्मणि विंदुरिच्छुरिति सूत्रेण उप्रत्ययो निपातितो नुमागमश्च कर्तरि उप्रत्ययपक्षे तु गोशब्देन द्वितीयांतेन समासः ॥ गोविंदश-ब्दात्सुपांसुलुगिति षष्ठयाः स्वादेशः ॥ गोविंदुः गोविंदोर्नारायण-स्यायुधानि जात्याख्यायामिति जातौ बहुवचनं ॥ आयुधत्वजात्यु-पेतं चक्रं शंखं च बिभ्रत्वा विशेषेण सुदर्शनहोमोपेताग्निना भृत्वा धारकः डुभृञ्धारणपोषणयोरित्यतः अन्येभ्योऽपि दृश्यंत इति क्वनिपि ह्रस्वस्य पिति कृति तुगिति तुक् ॥ शंखचक्रे सुदर्शनहोमसं-स्कृताग्निना संतप्येति यावत् ॥ बिभ्रत् धारयेत् ॥ स्वभुजयोरि-ति शेषः ॥ डुभृञ्धारणपोषणयोरित्यतः लेटि तिपि इतश्च लोप-इति इकारलोपे लेटोऽडाटौ इत्यडागमे शपः श्लौ द्विवादौ भृञामि-दित्यभ्यासस्येत्वे यणादेशः अभ्यस्तानामादिरित्याद्युदात्तत्वं छां-

दसस्तिङ्ङतिङ इति निघाताभावः ॥ स पुरुषः द्रप्सः द्रं कुत्सितं प्सः भक्षकः पापनाशकः सन्निति यावत् ॥ द्रा कुत्सायामित्यतः कर्मण्यौणादिको डप्रत्ययः ॥ प्सा भक्षण इत्यत आतोऽनुपसर्गे क इति कप्रत्ययः ॥ महिषः पूज्यः महपूजायामिति धातोः महेष्टिषजिति कर्मणि टिषच् प्रत्ययः ॥ कर्तरि तु गोविंदस्य पूजक इत्यर्थः ॥ गोविंदस्य तुरीयं चतुर्थं वासुदेवरूपं विश्वादिषु तुरीयनामकं वा धाम गृहरूपं विवक्ति प्राप्नोति ॥ वंचेर्बहुलं छंदसीति शपः श्लौ द्वित्वे बहुलं छंदसीत्यभ्यासस्येत्वं च धातूनामनेकार्थत्वात्प्राप्त्यर्थत्वं ॥ अथ वा आयुधानि चक्रशंखगदापद्मनारायणमुद्राख्यानि बिभृत्वा विशेषेण गोपीचंदनादिना संस्कारकः सन् बिभृयात् ॥ अन्यत्समानं अत्र लेटः लिङर्थे लेडिति लिङर्थे विधानात् लिङश्च विध्यर्थ-

कृत्वात्तप्तमुद्राधारणस्य प्रत्यहं गोपीचंदनादिना श्रीमुद्राधारणस्य च विधिः सिद्धः ॥ मोक्षाख्यफलकथनात् ॥ अत्र तात्पर्यं च सिद्धं गोविंदुरित्यस्य षष्ठ्यर्थत्वं विहाय प्रथमार्थत्वांगीकारे चमूषदित्यस्य विशेषणस्य विष्णौ बाधः ॥ बिभ्रूरित्यस्य वै बिभ्रदित्यनेन पुनरुक्तता ॥ विष्णोर्नित्यमुक्तत्वेन तुरीयधामप्राप्तेरपि सदातनत्वेन तदुक्तेर्वैयर्थ्यं स्यात् ॥ तथा आथर्वणश्रुतिः ॥ चक्रं बिभर्ति वपुषाभितप्तं बलं देवानाममृतस्य विष्णोः ॥ स एति लोकं दुरिता विधूय विशंति यद्यतयो वीतरागाः ॥ अस्यार्थः ॥ पुरुषः देवानां बलं बलप्रदं अमृतस्य विष्णोश्चक्रं सुदर्शनं अभितप्तं संस्कृताग्निना संतप्तं वपुषा शरीरावयवभूतभुजेन बिभर्ति बिभृयात् ॥ पूर्वश्रुतिसमाख्यानात् ॥ अयमपि लेट् ॥ सर्वे विधयश्छंदसि विकल्प्यंत इति वच-

नात् ॥ अडाटोरिकारलोपस्य चाभावः ॥ शंखस्याप्युपलक्षण-
मेतत् ॥ स पुरुषः दुरिता दुरितानि पापानि विधूय त्यक्त्वा वीत-
रागा वैराग्यशीलाः यतयः यत् यं लोकं विशंति प्रविशंति तं
विष्णोर्लोकमेति प्राप्नोतीति ॥ चक्रशब्दस्य सनाद्यर्थकत्वं अभि-
तप्तमित्युक्तेः वपुषा बिभर्तीत्युक्तेश्च बाधितं ॥ आथर्वणश्रुत्यंतरं च ॥
चक्रमादायाग्नौ ताप्य ब्राह्मणस्य दक्षिणे बाहौ धारयेत् ॥ उपविश-
ति पांचजन्यमादायाग्नौ ताप्य ब्राह्मणस्योत्तरे बाहौ धारयेत् ॥ ब्रह्म-
वादिनो वदंति देवासो येन विधृतेन बाहुना सुदर्शनेन प्रयाताः
स्वर्गमापतुर्येनांकिता लोके सृष्टिं वितन्वंति ब्राह्मणास्तद्वहंतीति ॥
षष्ठ्यर्थे द्वितीया वा ॥ इति भगवद्रूपापेक्षया षष्ठी ॥ तथा शतपथब्रा-
ह्मणेष्वथ कात्यायनेति होवाचेत्यादि नवखंडेषु तप्तचक्रं द्विभुजे धा-

र्यमित्यादीनि संति ॥ तथा वसिष्ठस्मृतिः ॥ शंखचक्रं स्फुटं कुर्यात्प्र-
तंप्तं बाहुमूलयोः ॥ सर्वाश्रमेषु वसतां स्त्रीणां च श्रुतिचोदनात् ॥
होमाग्निनैव संतप्तं चक्रमादाय वैष्णवः ॥ दक्षिणं बाहुमूलं तु
दग्ध्वा कर्म समाचरेत् ॥ स पुत्रपशुदाराणां ब्राह्मणानां विशे-
षतः ॥ कुर्यादचेतनानां च वैष्णवानां च लक्ष्म चेति॥शांडिल्यस्मृति-
रपि ॥ पशुपुत्रादिकं सर्वं गृहोपकरणानि च ॥ अंकयेच्छंखचक्राभ्यां
नाम कुर्याच्च वैष्णवं ॥ मुद्रयेदासनादीनि शयनानि महीतले इति॥
शंखोऽपि ॥ उपवीतादिवद्धार्याः शंखचक्रगदादयः ॥ ब्राह्मणस्य वि-
शेषेण वैष्णवस्य विशेषत इति । विस्तरस्तु स्मृतिकौस्तुभे बोध्यः॥
द्वादशोर्ध्वपुंड्राणि तु गोपीचंदनेन धार्याणीत्युक्तं ॥ वासुदेवोपनि-

१ सतप्तमिति वा पाठः

षदि ॥ ब्राह्मणानां तु सर्वेषां वैदिकानामनुत्तमं ॥ विधीयते तूर्ध्वपुंड्रं गोपीचंदनमृत्तिकेति पाद्मे ॥ श्रीरंगे द्वारकायां च श्रीकूर्मे च तथा स्थितं ॥ सिंहाद्रौ च प्रयागे च वाराहे तुलसीवने ॥ गृहीत्वा मृत्तिकां भक्त्या शालग्रामजलैः सह ॥ तयोर्ध्वपुंड्रं धृत्वांगे विष्णुसायुज्यमाप्नुयात् इति ॥ एताभिर्मृत्तिकादिभिर्मुद्राधारणमुक्तमाग्नेये ॥ चक्रशंखगदादीनि बिभृयाद्ब्राह्मणोत्तमः ॥ पंचायुधानि विष्णोस्तु ज्ञानमुक्तिप्रदानि वै इति ॥ अत्रावांतरविशेषोऽस्मत्पितृचरणकृतस्मृतिसंग्रहे बोध्यः ॥ आन्हिकप्रकरणे ॥ पृथिवीचंद्रोदयस्तु ॥ यस्तु संतप्तशंखारिसंचिन्हिततनुर्नरः ॥ स सर्वयातनाभोगी चंडालो जन्मकोटिषु ॥ द्विजन्मा तप्तशंखारिलिं-

१ सह्याद्राविति च पाठः

गांकिततनुर्नरः ॥ संभाष्य रौरवं याति यावदिंद्राश्चतुर्दशेति बृहन्नारदीयोक्तेः ॥ शंखचक्राद्यंकनं च गीतनृत्यादिकं तथा ॥ एकजातेरयं धर्मो न जातु स्याद्द्विजन्मनः ॥ शंखचक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा ॥ स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मण इति वैष्णवाश्वलायनवचनात् ॥ शंखचक्रादिधारणं तु शूद्रादिविषयमित्याहुः ॥ तत्तु विष्णुद्वेषमूलत्वादशुद्धं ॥ बृहन्नारदीयविष्णुपुराणआश्वलायनस्मृत्यादौ बहुपुस्तकेष्वेषां वचनानामभावात् ॥ क्वचित्तत्सत्वेऽपि बह्वृचादिश्रुतिहारीतादिस्मृतिकूर्मवराहवायुपुराणादिविरुद्धत्वेन औदुंबरीसर्ववेष्टनस्मृतिवदेषां वचनानामप्रामाण्यात् ॥ श्रुत्यादीनां तप्तमुद्राधारणविषये च निरवकाशत्वेन अर्थांतराभावस्यांतरानुपपत्त्योपपादितत्वात् ॥ एषां वचनानां बौद्धा-

दिद्वैत्यमतानुवादकत्वेन सावकाशत्वात् ॥ अनुवादस्य च दूषणार्थत्वेऽपि दूषणानां स्पष्टत्वेनानुक्तेः ॥ तथाहि येषु वचनेषु तप्तमुद्राधारणस्य केनचित्प्रसक्तस्य दूषणं वाच्यं ॥ अप्रसक्तस्य निषेधायोगात् ॥ अग्निदाहेन दुःखजनके तप्तमुद्राधारणे रागासंभवेन गोपीचंदनस्य दूरदेशस्थस्य शरीरायासद्रव्यव्ययसाध्यत्वेन विभूतिवदसुलभत्वात् ॥ तेन मुद्राधारणेऽपि रागासंभवेन रागतः प्राप्त्यभावात् । प्रत्यक्षानुमानविषयत्वेन ताभ्यामपि प्राप्त्यभावात् ॥ श्रुत्यादिना प्रसक्तिर्वक्तव्या ॥ तथा च श्रुत्यादेः स्वभावत उपजीव्यत्वं । ततश्च प्राबल्यात् ॥ तदुक्ततप्तमुद्राधारणस्य पुराणादिवचनेन पौरुषेयेणोपजीवकेन दूषयितुमशक्यत्वात् ॥ येषां वचनानां वेदोऽप्रमाणमिति बुद्धवाक्यवदसुरजनमोहनार्थत्वसंभ-

वाच्च ॥ अत एवोत्तरवाक्ये तप्तमुद्राधारणसाम्येन नृत्यगानयोर्ग्र-
हणं ॥ नहि नृत्यगानादिकं विष्णुभक्तानां निषिद्धं ॥ भागव-
तादौ ॥ नाहं वसामि वैकुंठे योगिनां हृदये तथा ॥ मद्भक्ता यत्र
गायंति तत्र तिष्ठामि नारदेति ॥ एवंव्रतः स्वप्रियनामकीर्त्या जा-
तानुरागो द्रुतचित्त उच्चकैः ॥ हसत्यथो रोदिति रौति गायत्युन्मा-
दवन्नृत्यति लोकबाह्य इति नृत्यगानयोः सर्वविष्णुभक्तलक्षणत्वे-
नोक्तेः ॥ ये कंठलग्नतुलसीनलिनाक्षमाला ये बाहुमूलयुगले धृत-
शंखचक्राः ॥ ये वा ललाटफलके लसदूर्ध्वपुंड्रास्ते वैष्णवा भुवन-
माशु पवित्रयंतीति वायुपुराणे ॥ विष्णुपुराणेऽपि ॥ भुजयुगम-
पि चिन्हैरंकितं यस्य विष्णोः परमपुरुषनाम्नां कीर्तनं यस्य वाचि ॥
ऋजुतरमपि पुंड्रं मस्तके यस्य कंठे सरसिजमणिमाला यस्य

तस्यास्मि वश्यः ॥ एवं स्थिते येषां वचनानां प्रामाण्यमित्याग्रहे तु अर्थांतरं वाच्यं ॥ अत्र पूर्वश्लोकस्थपूर्वार्धस्य स येन न पूयत इति विशेषेणान्वयः । द्वितीयश्लोके पूर्वार्धेन पूजयेदिति विशेषेणान्वयः ॥ तृतीयश्लोके तु एकजातेः एका मुख्या जातिर्ब्राह्मणत्वादिर्यस्य तस्य शंखचक्रादिधारणं धर्मः स्यान्नान्यस्य द्विजन्मनः द्वाभ्यां जातस्य अन्यस्य पत्न्यामन्यस्माज्जातस्येत्यर्थः॥इत्यावृत्त्या योज्यं ॥ चतुर्थश्लोके तु यथोक्तविधिना नेति शेषेणान्वयः ॥ अथवा पूर्वश्लोकद्वये तनुशब्दस्य ग्रहणात्सर्वतनौ तप्तमुद्राधारणे दोष उक्तः ॥ भुजद्वये धारणमित्यर्थः ॥ उत्तरश्लोकद्वये विध्यनुसारेणैव शंखचक्रादिधारणं कार्यमित्येवं ज्ञापयितुं विध्यतिक्रमे दोष उक्तः ॥ नहि प्रमाणानां निंदने तात्पर्यं ॥ नहि निंदा निंदितुं प्रवर्तते ॥ अपि

तु विधेयं स्तोतुं ॥ इति पूर्वमीमांसान्यायात् ॥ येष्वपि श्लोकेषु यथायोग्यं विधिकल्पनात् ॥ अतएव पूर्वोक्तिप्रमाणेषु भुजद्वयग्रहणं संगच्छते ॥ मृदा मुद्रादिधारणस्य द्वादशपुंड्रेषु संख्याविशेषेण च विधिः स्मृतिकौस्तुभादावुक्तो ज्ञेयः ॥ एवमेवान्यानि मुद्राधारणदूषणवाक्यानि योज्यानि ॥ आषाढशुक्लैकादश्यां देवस्य महापूजां कृत्वा चातुर्मास्यव्रतसंकल्पः कार्यः ॥ तदुक्तं भविष्ये ॥ महापूजां ततः कुर्याद्देवदेवस्य चक्रिणः ॥ जातीकुसुममालाभिर्मंत्रेणानेन पूजयेत् ॥ सुप्ते त्वयि जगन्नाथ जगत्सुप्तं भवेदिदं । विबुद्धे च विबुध्येत प्रसन्नो मे भवाच्युत ॥ चतुरो वार्षिकान्मासान्देवदेव जगत्पते । निर्विघ्नं सिद्धिमायातु प्रसादात्तव केशव ॥ गृहीतेऽस्मिन्व्रते देव पंचत्वं यदि मे भवेत् ॥ तदा भवेत्सुसंपूर्णं

प्रसादात्ते जनार्दन इति ॥ प्रथमे मासि दशविधशाकवर्जनं ॥
॥ दशविधशाकानि ॥ ॥ तदुक्तं स्कांदे ॥ मूलपत्रक-
रीराग्रफलकांडादिरूढकाः ॥ त्वक्पुष्पं कवचं चेति शाकं दश-
विधं स्मृतमिति ॥ अधिरूढकाः अंकुराः ॥ अत्र शक्यते येन
अन्नादिकं भोक्तुमिति विग्रहेण रूढ्या च अन्नादिभोजनसाधन-
पत्रफलशाकादेर्विवक्षितत्वात् । पूगीफलतांबूलपत्रादेर्निषेधा-
भावः ॥ आर्द्रकादेर्लवणशाकत्वेन अन्नभोजनसाधनत्वेऽपि त-
त्कार्यशुंठिमरीचिकादीनां शाकत्वेन प्रसिध्यभावान्न निषेधः ॥
एवं नारिकेलखर्जूरफलादिषु यत्रान्नसाधनत्वाभावः शाकत्वेन
प्रसिध्यभावो वा तेषां शाकव्रते भक्षणनिषेधो नास्तीति ज्ञेयं ॥
अत्र चतुर्मासेषु विशेषनियमाः कार्याः ॥ तथा च देवलः ॥

ब्रह्मचर्यं तथा शौचं सत्यमामिषवर्जनं ॥ व्रतेष्वेतेषु चत्वारि वरिष्ठानीति निश्चयमिति ॥ आमिषानि तु ॥ प्राण्यंगचूर्णं चर्मांबु जंबीरं बीजपूरकं ॥ अयज्ञशिष्टं माषादि यद्विष्णोर्न निवेदितं ॥ दग्धमन्नं मसूरं च आमिषं परिकीर्तितं ॥ प्राण्यंगचूर्णं शंखशुक्तिकादिजन्यंचूर्णं ॥ तेन पाषाणादिजन्यस्य न निषेधः ॥ चर्मांबु चर्मपात्रगतोदकं ॥ तेन चर्मपात्रगततैलघृतादेर्न निषेधः ॥ जंबीरं एतन्नामकं निंबूफलव्यतिरिक्तमेव ॥ आम्लरसोपेतं फलं ॥ बीजपूरकं मातुलुंगफलं ॥ जंबीरको दंतशठ इति ॥ बीजपूरो मातुलुंग इति च ॥ राजनिघंटौ जंबीरस्य केवलस्यामिषतुल्यत्वेऽपि तक्रादिसंयोगेनामिषत्वं ॥ यथा केवलस्य लवणस्य जिव्हेंद्रियसंबंधे प्रत्यक्षलवणं चैव गोमांसाशनवत्स्मृतमिति स्मृतेः ॥ गोमांसतुल्य-

त्वेऽपि शाकादिसंबंधेन न दोषः ॥ तथा जंबीरस्य रसोपेतं लसल्लव-
णमिश्रितं ॥ तक्रं देयं ब्राह्मणायेति पुराणे विधानात्तक्रसंबंधे न
दोषः ॥ अयज्ञशिष्टं। यज्ञः देवपितृयज्ञः देवयज्ञः समाराधनादि-
रूपः। पितृयज्ञः श्राद्धादिः॥ तत्र शिष्टं विहितं तद्व्यतिरिक्तं रागा-
दिना प्राप्तमित्यर्थः। माषादि माषान्नं ॥ आदिशब्देन । मधु ।
मधुमाषविवर्जितमित्यादौ माषनिषेधेन सह मधुनिषेधस्याप्युक्तेः।
द्वौ गावौ यत्र दुह्येते माता कन्या पयस्विनी ॥ तद्धृतं मधु संज्ञेयं
मधु नो माक्षिकं मधु ॥ गोच्छागी महिषी दुग्धादन्यद्दुग्धादि चा-
मिषं। द्विजक्रीता रसाः सर्वे लवणं भूमिजं तथा ॥ ताम्रपात्र-
स्थितं गव्यं जलं पल्वलसंस्थितं ॥ आत्मार्थं पाचितं चान्न-
मामिषं तत्स्मृतं बुधैः ॥ इति विष्णुधर्मोत्तरे ॥ चतुर्ष्वपि

हि मासेषु हविष्याणि न दोषकृत् ॥ हविष्याणि च भविष्य उक्तानि ॥ हैमंतिकं सिता स्विन्नं धान्यं मुद्गा यवास्तिलाः ॥ कंदं सैंधवसामुद्रे गव्ये च दधिसर्पिषी ॥ पयोऽनुद्धृतसारं च पनसाम्रहरीतकी ॥ नीवाराः षष्टिकाश्चैव नागरं गजतिंतिणी ॥ कदलीलवलीधात्रीफलान्यगुडमैक्षवं ॥ अतैलपक्वं मुनयो हविष्याणि प्रचक्षत इति ॥ अन्येऽपि नियमाः । तैलभोजनपरान्नत्यागरूपाः महाफलप्रदाः ॥ अनिषिद्धभोजनवस्तुमध्य आमरणांतं कस्यचिद्भोजनवर्जनं कार्यं ॥ तदसंभवे वा चातुर्मास्ये माघे वैशाखे च ॥ पौर्णमास्यां संन्यासिनां चातुर्मास्यसंकल्पः ॥ सा त्रिमुहूर्तव्यापिनी ग्राह्या ॥ आषाढकृष्णपंचमी जयतीर्थस्वामिनां पुण्यतिथिः ॥ अत्र कर्कसंक्रांत्यनंतरं मासपर्यंतं केशकृंतनं निषिद्धं ॥

कुंभे कर्कटके चापि कन्यायां कार्मुके रवौ ॥ रोमखंडो गृहस्थस्य पितृन्नाशयते यम इति याज्ञवल्क्यः ॥ कार्मुके धनुर्मासे ॥ स्मृत्यंतरेऽपि ॥ धनुःकुंभौ त्रिधा कृत्वा पूर्वभागद्वयं त्यजेत् ॥ अर्धं कर्कटके चैव कन्यां सर्वां परित्यजेदिति ॥ अथ नदीनां रजो दोषः ॥ सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः ॥ तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगा इत्युक्तेः ॥ वसिष्ठः ॥ उपाकर्मणि चोत्सर्गे प्रातःस्नाने तथैव च ॥ वापीकूपाद्यभावेऽपि तथा तत्तीरवासिनां ॥ महापदि प्रवासे च ग्रहणे चंद्रसूर्ययोः ॥ तत्र स्नानं प्रकुर्वीत रजोदोषो न विद्यते ॥ अत्र नदीग्रहणेन शोणसिंध्वादिनदानां रजोदोषो नास्तीत्युक्तं भवति ॥ नूतनकूपादौ तु । योगयाज्ञवल्क्यः ॥ अजा गावो महिष्यश्च ब्राह्मणी च प्रसूतिका ॥ भूमेर्नवोदकं चैव दश-

रात्रेण शुध्यतीति ॥ इत्याषाढमासः ॥ अथ श्रावणमासः ॥
श्रावणमासे शुक्लचतुर्थ्यां बालकानामनंतपूजा ॥ तस्यां बालकानां
त्रयोदशग्रंथियुक्तं अनंतदोरं कृत्वा दूर्वांकुरादिभिः संपूज्य दक्षिण-
हस्ते बध्नीयात् ॥ इयमेव वराहजयंती ॥ तदनंतरं शुक्लपंचम्यां
नागपूजा कार्या ॥ सा तु परविद्धा त्रिमुहूर्तव्यापिनी ग्राह्या ॥ श्राव-
णशुक्लैकादश्यां देवपूजानंतरं शाकव्रतं देवाय समर्प्य दध्यभोजनव्रतं
देवस्याग्रे संकल्पयेत् ॥ तस्मिन्मासेऽपि दध्यभोजनेऽपि तक्रभोज-
नस्य न निषेधः ॥ तत्कार्यत्वेऽपि ततो भिन्नत्वात् ॥ गुणभेदाद्व्यवहा-
रभेदाच्च ॥ एवं दुग्धव्रतेऽपि बोध्यं ॥ अन्यथा घृतादीनामपि त्या-
गापत्तेः ॥ अथ शुक्लद्वादश्यां विष्णोः पवित्रसमर्पणं ॥ पंचम्यां
पौर्णमास्यां वा ॥ पवित्रलक्षणं तु ॥ सुवर्णरजतताम्रसूत्रैः पट्ट-

दुकूलकार्पाससूत्रैर्वा पवित्रं कार्यं ॥ तत्रोत्तमपवित्रं तु षष्ट्यधिकश-
तत्रयसूत्रैः प्रतिमायाः जानुपर्यंतं मालाकारेण कृत्वा शतग्रंथि-
युक्तं कार्यं ॥ सप्तत्यधिकशतद्वयसूत्रैः मालाकारं नाभिपर्यंतं कृत्वा
पंचाशद्ग्रंथियुक्तं कार्यं ॥ अधमं तु अशीत्यधिकशतसूत्रैः षड्त्रिं-
शद्ग्रंथियुक्तं कार्यं ॥ प्रकारांतरं च ॥ षड्त्रिंशच्च चतुर्विंशत् द्वाद-
शेति च के चन ॥ चतुर्विंशद्द्वादशाष्टावित्येके मुनयो विदुः ॥ साधा-
रणपवित्राणि त्रिभिः सूत्रैः समाचरेदिति ॥ एवं पवित्राणि कृत्वा
सम्यक्प्रक्षाल्य अतोदेवा इत्यनेन पवित्रं ते इत्यनेन मंत्रेण देवस्य
समर्प्य ब्राह्मणेभ्यो दत्वा स्वयं धारयेत् ॥ इदं नित्यं ॥ न करोति
विधानेन पवित्रारोपणं तु यः ॥ तस्य सांवत्सरी पूजा निष्फला
मुनिसत्तमेति विष्णुरहस्योक्तेः ॥ अथोपाकर्म ॥ ऋग्वेदिभिः श्रा-

वणे मासे श्रवणनक्षत्रे उपाकर्म कार्यं ॥ श्रवणं तु उत्तराषाढा-
संबंधरहितं उदये मुहूर्तमात्रं ग्राह्यं ॥ उदयव्यापिनीत्वे च विष्णवर्क्षे
घटिकाद्वयं ॥ उपाकर्म प्रकुर्वीत तस्य पुण्यमनंतकमिति गा-
र्ग्योक्तेः ॥ पूर्वदिने उत्तराषाढयोगे परदिने श्रवणाभावे घटि-
काद्वयन्यूने वा भाद्रपदशुक्लपंचम्यां हस्तयुक्तायां वा कार्यं ॥ एवं
श्रवणदिने ग्रहणे संक्रांत्यादावपि ॥ अत्र विशेषो वृद्धमनुनोक्तः
अर्धरात्रादधस्ताच्चेत्संक्रांतिग्रहणं तदा ॥ उपाकर्म न कुर्वीत पर-
तश्चेन्न दोषकृदिति ॥ नर्मदोत्तरभागे तु कर्तव्यं सिंहयुक्तके ॥
कर्कटे संस्थिते भानौ उपाकुर्यात्तु दक्षिणे ॥ इति बृहस्पतिवचना-
द्दक्षिणे देशे कर्कटे सूर्ये स्थितेऽपि नोपाकर्मनिषेधः ॥ तैत्तिरीय-
कास्तूपाकर्म कुर्युः श्रावणपौर्णमास्यां ग्रहणसंक्रांतिरहितायां

संगवव्यापिन्यां ॥ सामगाः श्रवणे हस्ते शुक्लपंचम्यां वा उपाकर्म-
कुर्युः ॥ श्रावणे मासि अवृष्ट्या सस्यानुत्पत्तौ भाद्रपदश्रवणनक्षत्रे
कार्यं ॥ तत्रापि सस्यानुत्पत्तौ शुक्रास्तादावपि वार्षिकत्वात्कार्य-
मेव ॥ इदं पर्वणि ग्रहणेऽपि चतुर्दश्यां श्रवणे वार्षिकत्वात्कार्यं ॥
प्रथमारंभस्तु गुरुशुक्रयोः अस्तत्वे बाल्ये वृद्धत्वे च मलमासे च
न भवति ॥ गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्धिके मले ॥ प्रथमो
पाकृतिर्न स्यात्कृतं कर्म विनाशकृदिति गार्ग्योक्तेः ॥ गुरुशुक्रयोर-
स्तमयात्पूर्वं वृद्धत्वं ॥ उदयानंतरं बाल्यत्वं ॥ तत्र शुक्रः पश्चा-
दस्तमाने पंचदिनानि सप्तदिनानि वा वृद्धत्वं ॥ उदये तु त्रिदिनं
पंचदिनं वा ॥ एवं गुरोरपि ॥ शुक्रगुर्वस्तग्रहणसंक्रांत्यादि-
प्राप्तौ तु भाद्रपदमासि श्रवणे बह्वृचः पूर्णिमायां तु यजुःशा-

खिनः ॥ हस्ते पंचम्यां वा सामगाः उपाकर्म कुर्युः ॥ तत्रापि शुक्रास्तादिप्राप्तौ आषाढमासे श्रावणे पौर्णमास्यां हस्ते पंचम्यां वा कुर्युः ॥ तथा च बौधायनः ॥ श्रावण्यां पौर्णमास्यामाषाढ्यां चोपाकृत्य छंदांस्यधीयीतेति ॥ अत्र श्रावणीआषाढीग्रहणं तत्तन्मासस्य श्रवणहस्तपंचम्युपलक्षणार्थं ॥ अत्र सामान्यतो विधानं तु आषाढ्यामित्येतदपि भाद्रपदेऽपि प्रतिबंधके सति ऋग्वेदादिसर्वशाखिविषयं ज्ञेयं ॥ कालांतर उपाकर्माविधानात् ॥ उपाकर्मणश्च प्रथमवर्षे अवश्यं कर्तव्यत्वात् ॥ एवं श्रावण्यां प्रोष्ठपद्यां वा उपाकृत्य यथाविधि ॥ उक्तछंदांस्यधियीतेति ॥ मनुवाक्येऽपि श्रावणमासे संक्रांत्यादिदोषयुक्ते सति प्रोष्ठपद्यां भाद्रपदपूर्णिमायां तत्रस्थश्रवणहस्तपंचमीषु ऋग्वेदादिशाखि-

भिरुपाकर्म कार्यमित्यर्थो बोध्यः ॥ पर्वण्यौदयिके कुर्युः श्रावणे तैत्तिरीयकाः ॥ बह्वृचाः श्रवणे कुर्युर्हस्तर्क्षे सामवेदिन इति गोभिलवचने श्रावणे मासि औदयिके पर्वणि पौर्णिमायां तैत्तिरीयकाः यजुर्वेदिन उपाकर्म कुर्युः ॥ श्रावणे मासि श्रवणे ऋग्वेदिनः ॥ हस्ते नक्षत्रे सामवेदिनः कुर्युः ॥ इति विशेषवचनात् भाद्रपदाषाढमासयोरपि ऋग्वेदिनां श्रवणनक्षत्रं सामवेदिनां हस्तनक्षत्रमिति ग्राह्यं ॥ इत्युपाकर्म ॥ अथोत्सर्गः ॥ बह्वृचैर्माघ्यां कार्यः ॥ तैत्तिरीयैरुत्सर्जनं तु पौष्यां पौर्णमास्यां रोहिण्यां वा कार्यं ॥ काण्वादिभिस्तु भाद्रपदेषु पुष्यनक्षत्रे वा कार्यः ॥ सर्वैरुपाकर्मदिने वा कार्यं ॥ पुष्ये चोत्सर्जनं कुर्यादुपाकर्म दिनेऽपि चेति स्मृतेः ॥ इदमपि उपाकर्मवत्प्रथमतो ग्रहणसंक्रांत्यादौ मल-

मासे च न कार्यं ॥ उपाकर्मोत्सर्जने मलमासानंतरं शुद्धमासे कार्ये ॥ श्रावणी पूर्णिमा हयग्रीवजयंती ॥ कृष्णपक्षाष्टमी कृष्णाष्टमी ॥ सा पूर्वमेव निर्णीता ॥ अत्र सिंहस्थेऽर्के गोप्रसूतिरनिष्टदा ॥ सिंहराशिगते सूर्ये गोप्रसूतिर्यदा भवेत् ॥ पौषे च महिषी सूते दिवा चाश्वतरी तथा ॥ माघे बुधे च महिषी श्रावणे वडवा दिवा ॥ तदानिष्टं भवेत्किंचित्तच्छांतौ किंचिदाचरेत् ॥ प्रसूतांते क्षणादेव तां गां विप्राय दापयेत् । ततो होमं प्रकुर्वीत घृताक्तै राजसर्षपैः॥ आहुतीनां घृताक्तानां अयुतं जुहुयात्ततः ॥ सोपवासः प्रयत्नेन दद्याद्विप्राय दक्षिणामिति ॥ व्याहृतिभिश्चायं होमः ॥ श्रावणामावास्यायां कुशग्रहणं ॥ मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ॥ अयातयामास्ते दर्भा विनियोज्याः पुनःपुनः ॥ इति

हारितोक्तेः ॥ नभसि श्रावणे ॥ नभस्यैः श्रावणो मासः इत्यभिधानात् ॥ अयातयामाः पर्युषितत्वदोषरहिताः ॥ पुनःपुनः विनियोज्याः ॥ स्नानतर्पणादौ गृहीतास्त एव पुनःपुनः द्वितीयस्नानतर्पणादावपि ग्राह्याः ॥ तेषां शेषत्वदोषो नास्तीति भावः ॥ पिंडे विनियुक्तानां तु अन्यकर्मणि न ग्राह्यत्वं स्मृत्यंतरादवगंतव्यं॥ यथा शवदाहे विनियुक्ताग्नेर्यथा वा एकादशाहे भोक्तुर्ब्राह्मणस्याग्राह्यत्वं तथैवावावगंतव्यं ॥ श्रावण्यां श्रवणे चैव पूर्वं हयशिरा हरिः ॥ जगाद सामवेदं तु सर्वकिल्बिषनाशनं ॥ सिंधुर्नदीपतिः स्वीयं प्रतिष्ठा तत्र चैव हि ॥ अतोऽर्थे श्रवणे चैव स्नानं सर्वार्थसिद्धिदं ॥ हुत्वा संपूजयेद्विष्णु शार्ङ्गचक्रगदाधरं ॥ श्रोतव्यानि तु सामानि पूज्या विप्राश्च सर्वदा ॥ क्रीडितव्यं च भोक्तव्यं तत्रैव

स्वजनैः सह ॥ जलक्रीडा तु कर्तव्या नारीभिर्भर्तृभिः सह ॥ इति श्रावणमासः ॥ ॥ अथ भाद्रपदमासः ॥ अत्र शुक्लतृतीया मन्वादिः ॥ अस्यां मुहूर्तमात्रव्यापिन्यां हरितालिकागौरीव्रतं ॥ शुक्लचतुर्थ्यां मध्यान्हव्यापिन्यां सिद्धिगणेशव्रतं ॥ परदिन एवांशेन साकल्येन वा मध्यान्हव्याप्त्यभावे सर्वपक्षेषु पूर्वा ग्राह्या ॥ चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते ॥ मध्यान्हव्यापिनी चेत्स्यात्परतश्चेत्परेऽहनीति बृहस्पत्युक्तेः ॥ इयं रविभौमवारयोश्चेद्विशेषफलदा॥ अत्र चंद्रदर्शनं निषिद्धं ॥ मिथ्याभिशापप्राप्तेः ॥ दैवाच्चेच्चंद्रदर्शने मिथ्याभिशापपरिहारस्तु विष्णुपुराणे ॥ सिंहः प्रसेनमवधीत्सिंहो जांबवता हतः ॥ सुकुमारक मारोदीस्तव ह्येष स्यमंतकः॥ इति जांबवत्या स्वभ्रातरं प्रति वचनस्य स्मरणं॥भाद्रपदशुक्लपंचमी ऋषिपंचमी॥इयं

मध्यान्हव्यापिनी ग्राह्या ॥ दिनद्वये तथात्वे परा ॥ दिनद्वये तथात्वे तद्व्याप्तौ अव्याप्तौ वा परैव ॥ तत्र सप्तर्षिपूजादिकं तत्कल्पोक्तं ज्ञेयं ॥ शुक्लषष्ठ्यां तु ॥ शुक्ले भाद्रपदे षष्ठ्यां स्नानं भास्करपूजनं ॥ प्राशनं पंचगव्यस्य अश्वमेधफलाधिकं ॥ योऽस्यां पश्यति गांगेयं दक्षिणापथवासिनं ॥ ब्रह्महत्यादिपापैस्तु मुच्यते नात्र संशय इति भविष्ये ॥ गांगेयः कार्तिकेयः ॥ भाद्रपदशुक्लाष्टमी कृष्णाष्टमी ॥ सा पूर्वविद्धा ॥ नवमी दुर्गानवमी ॥ इयं ज्येष्ठापूजिते ज्येष्ठायोगवशे पूर्वा परा वा ग्राह्या ॥ दिनद्वययोगे परा ॥ प्रतिवार्षिकं ज्येष्ठाव्रतं अष्टम्यामेव कार्यं ॥ परंतु दाक्षिणात्यास्तु ऋक्ष एव कुर्वंति ॥ अत्र भानुवाराष्टमीज्येष्ठायोगोऽतिप्रशस्त इति भावः शुक्लैकादशी परिवर्तनैकादशी ॥ अस्यां देवपू-

जानंतरं दधिव्रतं परिसमाप्य दुग्धव्रतसंकल्पं कुर्यात् ॥ अ-
स्मिन्मासि दुग्धकार्यं पायसामिक्षमंठादिभोजनं च न कार्यं ॥
क्षीररसानुवृत्तेः॥ दुग्धप्रत्यभिज्ञायाश्च सत्वात् ॥ दधितक्रघृतानां तु
न निषेधः ॥ तेषु दुग्धरसाननुवृत्तेः ॥ दुग्धकार्यकारित्वाभावाच्च ॥
उष्णदुग्धे दधिस्थापनेन यज्जातं सा आमिक्षा ॥ संधिन्यनि-
र्दशावत्सगोपयः परिवर्जयेत् ॥ इति वचनं दुग्धव्रतातिरिक्त-
कालेऽपि निषेधार्थं ॥ संधिनी गर्भिणी ॥ अनिर्दशा प्रसवानंतरं
अनिर्गतदशरात्रा ॥ अवत्सा मृतवत्सा ॥ द्वादश्यां विष्णुपरिवर्त-
नोत्सवं कुर्यात् ॥ प्रातः विष्णुं संपूज्य प्रार्थयेत् ॥ तत्र मंत्रः ॥
नमस्कृत्वा जगन्नाथं पर्यंके शायिनं मुदा ॥ अवघुट्य शनैर्गत्वा पूज-
येदुपचारकैः ॥ प्रणम्य भक्त्या तत्पादौ गृह्यौपनिषदः स्तुवन् ॥

मंत्रमेवं पठन्देवं स्थापयेदुत्तरामुखं ॥ देवदेव जगन्नाथ कल्पानां परिवर्तक ॥ परिवृत्तमिदं सर्वं येन स्थावरजंगमं॥यदिच्छाचेष्टितैरेव जाग्रत्स्वप्नसुषुप्तिभिः ॥ जगद्धिताय सुप्तोऽसि पार्श्वेन परिवर्तय॥ परिवर्तनकालोऽयं जगतः पालनाय ते ॥ तवाज्ञयायं शक्रोऽपि ध्वजे तिष्ठेत्समुत्सुकः ॥ दृष्ट्वा त्वत्पादकमलं विमुंचन्मूर्धभिर्जलं ॥ महीतलं प्लावयति प्रजापालनहेतुकं ॥ इति संप्रार्थ्य देवेति विनयात्तोषयेत्ततः ॥ वासुदेव जगन्नाथ प्राप्तेयं द्वादशी तव ॥ पार्श्वेन परिवर्तस्व सुखं स्वपिहि माधव ॥ अत्र एकादश्यां द्वादशीश्रवणयोगः विष्णुशृंखलयोगः ॥ द्वादशी श्रवणं स्पृष्ट्वा स्पृशेदेकादशीं यदि ॥ स एव वैष्णवो योगो विष्णुशृंखलसंज्ञित इति नारदीये॥ अन्येऽपि विशेषाः ॥ बुधश्रवणसंयुक्ता सैव चेद्वादशी यदि ॥ अत्यं-

तमहती सा स्याद्दत्तं भवति चाक्षयमिति स्कांदे ॥ इयं तु उत्तरा-
षाढमिश्रा न ग्राह्या ॥ इयं द्वादशी वामनजयंती ॥ तदुक्तमष्टम-
स्कंधे भागवते ॥ श्रोणायां श्रवणद्वादश्यां मूहूर्तेऽभिजिति प्रभु-
रिति ॥ हरिर्वामनरूपेण अवतीर्ण इति शेषः ॥ श्रोणायां श्रव-
णनक्षत्रे चंद्रे सति अभिजिति मध्यान्हस्य घटिकाद्वये श्रावणद्वा-
दश्यां मेषादिसौरमासानां चैत्रादिसंज्ञाविवक्षायां सौरमासस्य
श्रावणत्वात् तस्य शुक्लद्वादश्यां वामनावतारः ॥ तेन चांद्रभाद्रप-
दस्य शुक्लद्वादश्यां श्रवणनक्षत्रे वामनावतार इति पुराणोक्तवि-
रोधाभाव उक्तो भवति ॥ वामनावतारकाले सिंहराशौ सूर्यस्याव-
स्थानात् ॥ भाद्रपदशुक्लचतुर्दशी अनंतचतुर्दशी ॥ सा त्रि-
मूहूर्तव्यापिनी मूहूर्तव्यापिनी वा ग्राह्या ॥दिनद्वयेऽप्युदयव्यापिन्यां

पूर्वा ग्राह्या ॥ मध्यान्हे पूजाकालस्य सत्त्वात् ॥ उदयव्याप्त्यभावे त्रयोदशीयुता ग्राह्या ॥ अथ भाद्रपदपौर्णमास्यां प्रपितामहादिपूर्वांस्त्रीन्पितॄनुद्दिश्य पक्षश्राद्धकर्त्रा श्राद्धं कार्यं ॥ तदुक्तं ब्राह्मे ॥ नांदीमुखानां प्रत्यब्दं कन्याराशिगते रवौ ॥ पौर्णमास्यां तु कर्तव्यं वाराहवचनं तथा ॥ एषां नांदीमुखत्वं तत्रैव । पिता पितामहश्चैव तथैव प्रपितामहः ॥ त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्तिताः ॥ तेभ्यः पूर्वतरा ये च ते तु नांदीमुखाः स्मृताः इति ॥ अत्र मातामहा अपि ग्राह्याः । पितरो यत्र पूज्यंते तत्र मातामहा अपि ॥ अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेदित्युक्तेः ॥ एतेषां सपिंडकं श्राद्धं कार्यं ॥ पौर्णमासीषु सर्वासु निषिद्धं पिंडपातनं ॥ वर्जयित्वा प्रौष्ठपदीं यथा दर्शस्तथैव चेति गार्ग्योक्तेः ॥ एत-

त्पौर्णमासीश्राद्धं सर्वैरपि कार्यं ॥ पक्षश्राद्धकर्त्रैव कार्यमिति वि-
शेषज्ञापकाभावात् ॥ अथापरः पक्षः ॥ आषाढीपौर्णमासीमारभ्य
पंचमः पक्षो ऽपरपक्षः ॥ कन्यासंक्रांतियुक्तश्चेत्पुण्यतमः ॥ तत्र
श्राद्धमावश्यकं ॥ तत्र पक्षपंचकं ॥ भाद्रपदकृष्णप्रतिपदमारभ्य
आश्वयुजशुक्लप्रतिपत्पर्यंतं षोडशदिनेषु श्राद्धमिति एकः पक्षः ॥
भाद्रपदपूर्णिमामारभ्य अमावास्यापर्यंतमित्यपरः ॥ पंचमीमा-
रभ्य अमावास्यापर्यंतमित्यन्यः ॥ अष्टमीमारभ्य दशमीमारभ्य वा
अमावास्यापर्यंतमिति चतुर्थपंचमपक्षौ ॥ तिथिवृद्धौ तु प्रतिपदमा-
रभ्य अमावास्यापर्यंतमिति षष्ठोऽपि ॥ एकस्मिन्नपि वा दिने सर्व-
पित्रुद्देशेन श्राद्धमावश्यकं ॥ अकरणे प्रत्यवायात् ॥ अन्येषु पक्षेषु
फलभूयस्त्वं नत्वकरणे प्रत्यवायः । विधवायास्तु स्वभर्त्रादित्रय-

पित्रादित्रयमातामहादित्रयाणां स्वसृमातामह्याश्च श्राद्धं कृत्वा पिंडदानं कार्यं ॥ उक्तं तु संग्रहे ॥ चत्वारि पार्वणानीह विधवायाः सदैव हि । स्वभर्तृश्वशुरादीनां मातापित्रोस्तथैव च ॥ ततो मातामहानां च श्राद्धदानमुपक्रमेत् ॥ इतोऽपि शक्तौ सत्यां ॥ श्वश्रूणां च विशेषेण मातामह्यास्तथैव च ॥ इति षट्पार्वणानि भवंति ॥ अत्यशक्तौ तु स्वभर्तृप्रभृतित्रिभ्यः स्वपितृभ्यस्तथैव च ॥ विधवा कारयेच्छ्राद्धं यथाकालमतंद्रितेति वचनं तु प्रतिसांत्सरिकविषयं ॥ यथाकालमित्युक्तेः ॥ भर्तृपित्रादीनां स्वस्वश्राद्धदिनकाल इत्यर्थः ॥ इदं तु पुत्राभावे ज्ञेयं ॥ सकृन्महालयश्राद्धे तु प्रतिपत्षष्ठीसप्तम्येकादशीत्रयोदशीचतुर्दश्यः । मंगलादित्यभृगुवाराः ॥ कृतिका रोहिणी मघारेवती स्वजन्मनक्षत्रं स्वजन्मनक्ष-

त्रात्पूर्वोत्तरनक्षत्रे चेत्येतानि वर्ज्यानि ॥ अस्मिन्पक्षे भरणीव्य-
तीपाताष्टमीद्वादश्यमावास्यादिनेषु वारादिनिषेधो नास्ति॥ तत्रापि
पितृश्राद्धदिने सकृन्महालयश्राद्धे तु बहुफलं ॥ तिथ्यादिनिषेधश्च
नास्ति ॥ एवं पक्षश्राद्धेऽपि॥ तथा च कार्ष्णाजिनिः॥ नभस्यस्या-
परे पक्षे श्राद्धं कार्यं दिनेदिने ॥ नैव नंदादि वर्ज्यं स्यान्नैव निंद्या
चतुर्दशीति ॥ पंचम्यादिश्राद्धपक्षे तु प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा
चतुर्दशीमिति याज्ञवल्क्योक्तेः। चतुर्दश्यां न श्राद्धं पौर्णिमास्याः
पितृतिथित्वे तु भरण्यष्टम्यादिष्वेकदिने श्राद्धं तत्र त्रयोदशी च-
तुर्दश्योः श्राद्धदिनत्वेऽपि तयोः पिंडदाननिषेधादत्र भरणीदिने भ-
रणीप्रयुक्तमप्यापिंडकं श्राद्धं कार्यं॥ यत्तु विवाहव्रतचूडासु वर्षमर्धं
तदर्धकं ॥ पिंडदानं मृदा स्नानं न कुर्यात्तिलतर्पणं ॥ इति निषेध-

वचनं तु महालयादिव्यतिरिक्तविषयं ॥ महालये गयाश्राद्धे माता-
पित्रोर्मृतेऽहनि ॥ कृतोद्वाहोऽपि कुर्वीत पिंडनिर्वापणं सदेत्युक्तेः ॥
संन्यासिपुत्रैर्द्वादश्यामपरपक्षश्राद्धं कार्यं । भरण्यादौ वा ॥ अप-
रपक्षमध्ये श्राद्धासंभवे तु कन्यासंक्रातिमध्ये एकस्मिन् दिने कार्यं॥
दीपावल्यामावास्यायां वा ॥ वृश्चिकसंक्रांतिपर्यंतं वा ॥ ततः
पितरः शापं दत्वा गच्छंति ॥ वृश्चिकपर्यंतं श्राद्धासंभवे तु मंत्रः ॥
दुरोअश्वंस्यदुरइंद्रगोरसिदुरोयवंस्यवसुंनइनस्पतिः शिक्षानरः प्र-
दिवोअकामकर्शनः सखासखिभ्यस्तमिदं गृणीमसीति मंत्रस्य द-
शवारं जपः कार्यः ॥ तेन महालयपूर्तिः ॥ अत्र तिलतर्पणं तु ॥
तीर्थे तिथिविशेषे च गयायां प्रेतपक्षके । निषिद्धेऽपि दिने कुर्या-
त्तर्पणं तु तिलैः सहेति स्मृतेः ॥ अथात्र महालये देवताः ॥ ता-

तांबात्रितयं सपत्नजननी मातामहादित्रयं सस्त्रि स्त्री तनयादि तातजननीस्वभ्रातरः सस्त्रियः ॥ तातांबात्मभगिन्यपत्यधवयुग्जायापिता सद्गुरुः शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे ॥ अस्यार्थः॥ पित्रादित्रयं। मात्रादित्रयं। यस्त्वनेकमातृकः तस्य विशेषमाह गालवः ॥ अनेका मातरो यस्य श्राद्धे वापरपक्षके ॥ अर्घ्यदानं पृथक्कुर्यात्पिंडमेकं तु निर्वपेदिति ॥ जीवन्मातृकस्तु सापत्नमातुरेकोद्दिष्टं कुर्यात् ॥ न तु पितामह्यादीनाम्। अन्वष्टक्यादौ सापत्नमात्रादित्रयस्याऽपि जीवत्पितृकेणार्घ्यपिंडादिकं कार्यं ॥ अन्वष्टक्यं च यन्मातुर्गयाश्राद्धं महालयं ॥ पितृपत्नीषु यछ्राद्धं कार्यं पार्वणवद्भवेत् ॥ इति वृद्धमनूक्तेः॥ सस्त्रीति मातामह्यादित्रयं पृथग्देवताः॥ स्त्री आत्मपत्नी ॥ तनयादि पुत्रः

पुत्री च ॥ तातजननीस्वभ्रातरः । तातभ्राता पितृव्यः । जननीभ्राता मातुलः । स्वभ्राता च एते त्रयः सस्त्रियः सपत्नीका देवताः । तातांबात्मभगिनी । तातभगिनी पितृष्वसा । अंबाभगिनी मातृष्वसा । आत्मभगिनी स्वभगिना ॥ एतत्त्रितयं । अपत्यधवयुक्पुत्रपतिसहितं देवताः । जायापिता श्वशुरः ॥ श्वश्रूशालकयोरप्युपलक्षणं ॥ जामातृभगिनीसुतदौहित्राणामुपलक्षणं ॥ सद्गुरुः वेदसच्छास्त्रोपदेष्टा ॥ पितृव्यादिषु पितृव्याः सपत्नीकाः सपुत्रकाश्चेति ॥ पितृष्वस्रादिषु । सभर्तृकायै सपुत्रकायै इत्यादिप्रयोगो द्रष्टव्यः ॥ पितृव्यादीनां जीवनत्वेन तत्स्त्रियादीनां न पिंडदानादि । द्वारलोपात् ॥ अत्र तंत्रेण पार्वणैकोद्दिष्टानां श्राद्धं ॥ धूरिलोचनौ विश्वेदेवौ ॥ महालयादेः श्राद्धं संन्यस्तपतितजीवत्पितृकेणापि

पिंडार्घ्यरहितं संकल्पश्राद्धं कार्यं ॥ वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति ॥ येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुत इति कात्यायनोक्तेः ॥ मुंडनं पिंडदानं च प्रेतकर्म च सर्वशः ॥ न जीवत्पितृकः कुर्याद्गुर्विणीपतिरेव चेति पिंडनिषेधात् ॥ स्वमातृमातामहादीनां गयान्वष्टकाश्राद्धानि विशेषवचनात्सपिंडकानि कार्याणि ॥ अपरपक्षश्राद्धं मलमासे न कार्यं ॥ अस्मिन्पक्षे षष्ठी मंगलवारे रोहिणीनक्षत्रव्यतीपातयुता चेत्कपिलसंज्ञा ॥ हस्ते सूर्यश्चेद्विशेषफलप्रदा ॥ अत्र स्नानोपवासजपहोमकपिलगोदानसूर्यांतर्गतविष्णुपूजादिकं महाफलप्रदं ॥ अत्र विशेषः ॥ स्कांदे ॥ देवदारुं तथा सीरं कुंकुमैलामनःशिलां ॥ पत्रकं पद्मकं षष्ठी मधुगव्येन भूषयेत् ॥ क्षीरेणालोड्य गव्येन स्नानं कुर्यात्समंत्रकं ॥ आ-

पस्त्वमसि देवेश ज्योतिषां पतिरेव च ॥ पापं नाशय मे देव वा-
ङ्मनःकायकर्मजं ॥ पंचगव्यकृतस्नानः पल्लवैश्चैव मार्जयेदिति॥
अत्र सुवर्णस्य सूर्यांतर्गतलक्ष्मीनारायणप्रतिमां कृत्वा संपूज्य ब्रा-
ह्मणाय दद्यात् ॥ अयं योगः चंद्रोदये यदा स्यात्तदेयं चंद्रषष्ठी ॥
तत्र दिनद्वये चंद्रोदये चेत् पूर्वैव ग्राह्या ॥ तदा अत्रैव व्रतादिकं
ज्ञेयं ॥ अत्र सप्तम्यादित्रयं तिस्राष्टकं । मध्याष्टमी गयातुल्या ॥
अथ नवम्यामन्वष्टकश्राद्धं ॥ अन्वष्टकासु नवभिः पिंडैः श्राद्धमुदा-
हृतं ॥ पित्रादिमातृमध्यं च ततो मातामहांतिकमिति कात्यायनोक्तेः॥
इदमन्वष्टकश्राद्धं जीवत्पितृकेणाऽपि सर्वमातॄणां कार्यं ॥ सर्वासा-
मपि मातॄणां श्राद्धं कन्यागते रवौ ॥ नवम्यां हि प्रदातव्यं ब्रह्म-
लब्धवरा यत इति सुतेनावश्यकर्तव्योक्तेः ॥ जीवत्पितृकेणान्वष्टकां-

तराकरणेऽपि इदं कार्यं ॥ अत्र सर्वासामित्युक्तेः स्वमातरि जीवत्यामपि अन्यासां सपत्निमातॄणां कार्यं ॥ स्वमातरि मृतौ तत्सहितानां ॥ अत्र सर्वासां नामनिर्देशेन एको ब्राह्मणोऽर्घ्यः पिंडश्च नामैक्ये तु द्विवचनादि प्रयोगः ॥ ततः पितामहिप्रपितामह्योः अर्घ्यादिपिंडादि । विश्वेदेवस्थाने अन्यो ब्राह्मणः । एतत्तु भर्तृमरणे न कार्यं ॥ श्राद्धे नवम्यां कुर्यात्तु मृते भर्तरि लुप्यत इति स्मृतेः ॥ शिष्टाचाराच्च ॥ यत्तु कमलाकरेण इदं वचनं निर्मूलत्वादप्रमाणमित्युक्तं तदयुक्तं । शिष्टाचारविरोधात् । इयं अविधवा नवमीत्युच्यते ॥ अत्र त्रयोदशी युगादिः ॥ अस्यां ससंतानेन अपिंडकं श्राद्धं कार्यं ॥ एतच्च नित्यं ॥ बहुफलप्रदा च त्रयोदशी ॥ त्रयोदशी भाद्रपदी कृष्णा मुख्या पितृप्रिया ॥ तृप्यंति पितरस्तस्यां

स्वयं पंचशतं समाः॥ मघायुतायां तु तस्यां जलाद्यैरपि तोषिताः॥ तृप्यंति पितरस्तत्र वर्षाणामयुतायुतं ॥ श्राद्धमस्यामकुर्वाणो नरकं प्रतिपद्यत इति विष्णुधर्मे ॥ अत्र सूर्ये हस्तस्थिते इयमेव गजच्छाया॥ सूर्ये हस्तस्थिते या तु मघायुक्ता त्रयोदशी ॥ तिथिर्वैवस्वती नाम स्याच्छाया कुंजरस्य तु ॥ मधुमाषैश्च शाकैश्च पयसा पायसेन च ॥ श्राद्धं भाद्रे त्रयोदश्यां मघासु च विशेषत इति वसिष्ठः ॥ इदं मघात्रयोदशीश्राद्धं अविभक्तैरपि पृथक्कार्यं ॥ विभक्ता वाविभक्ता वा कुर्युः श्राद्धं पृथक् सुताः ॥ मघासु च ततोऽन्यत्र नाधिकारः पृथग्विनेति स्मृतेः। इदं मलमासेऽपि कार्यं॥ इदं तु षड्दैवत्यं श्राद्धं ॥ पक्षश्राद्धकर्त्रा तु तंत्रेण कार्यं न तु पृथक् ॥ न वा प्रसंगतः सिद्धिः ॥ अथ चतुर्दशी ॥ अस्यां विष-

शस्त्रजलाग्निसर्पविद्युद्दंष्ट्रिशृंग्यादिभिर्हतानां सवैश्वदेवं एकोद्दिष्टवि-
धानेन एकपिंडकं श्राद्धं कार्यं ॥ प्रेतपक्षे चतुर्दश्यामेकोद्दिष्ट-
विधानतः ॥ दैवयुक्तं तु तच्छ्राद्धं पितॄणामक्षयं भवेत् ॥ अमावा-
स्यायां विशेषः ॥ सूर्ये हस्तस्थिते अमावास्यायां हस्तनक्षत्रं चेत्सा
गजच्छाया ॥ तथामावास्यायां मध्यान्हानंतरं यदा छाया किंचि-
त्पूर्वस्यां दिशि गच्छति साऽपि गजच्छाया। तस्मिन्काले श्राद्धादि-
कं मुख्यं। हंसे करस्थिते या तु अमावास्या कराऩ्विता ॥ सा ज्ञेया
कुंजरच्छाया इति बोधायनोऽब्रवीत् ॥ वनस्पतिगते सोमे या छाया
प्राङ्मुखी भवेत् ॥ गजच्छाया तु सा प्रोक्ता तस्यां श्राद्धं प्रकल्प-
येत् । इति स्मृतेः ॥ हंसः सूर्यः करो हस्तः ॥ प्राङ्मुखी पूर्वमुखी ॥
इति भाद्रपदमासः ॥ ॥ अथाश्वयुजमासः ॥ आश्विनशुक्ल-

प्रतिपदि दौहित्रस्य मातामहश्राद्धमुक्तं ॥ जातमात्रेऽपि दौहित्रे विद्यमानेऽपि मातुले ॥ कुर्यान्मातामहश्राद्धं प्रतिपद्याश्विने सतीति ॥ प्रतिपद्याश्विने शुक्ले दौहित्रस्त्वेकपार्वणं ॥ श्राद्धं मातामहं कुर्यात्सपिता संगवे सदेति स्मृतेः ॥ इदं श्राद्धं जीवत्पितृककर्तृत्वादपिंडकं कार्यं ॥ मुंडनं पिंडदानं च प्रेतकर्म च सर्वशः ॥ न जीवत्पितृकः कुर्याद्गार्भिणीपतिरेव चेति निषेधात् ॥ अन्वष्टक्यवद्विशेषवचनाभावाच्च ॥ अत्रैव नवरात्रारंभः ॥ अमायुक्तप्रतिपदि कलशस्थापनं न कार्यं मुहूर्तमात्रे प्रतिपदि द्वितीयायुक्तायामेव कलशस्थापनं कार्यं ॥ पूर्वदिने यदि शुद्धा प्रतिपत् द्वितीयदिने वर्धते तदा तु पूर्वदिन एवारंभः ॥ यदाऽपि परदिने सर्वथा प्रतिपन्नास्ति तदामायुक्तपूर्वदिने व्रतारंभः ॥ अत्रैवोपवासा-

दिकं च कार्यं ॥ तिथिवृद्धौ तिथिऱ्हासे नवरात्रमपार्थकं ॥ अष्टरात्रे न दोषोऽयं नवरात्रतिथिक्षय इति वचनान्नवरात्रशब्दो लक्षणया क्वचिन्नवदिनक्रियमाणकर्मवाचकः ॥ क्वचिन्मुख्यार्थः ॥ प्रतिपदि चित्रा वैधृतिश्चेत्तदंते कलशस्थापनं ॥ संपूर्णा चेद्वैधृतिचित्राचतुर्थांशे कलशस्थापनं ॥ अभिजिन्मुहूर्ते वा ॥ वैधृत्याद्यभावे प्रातर्दशघटिकामध्ये कलशस्थापनं मुख्यं ॥ रात्रौ तु न कार्यमेव नवरात्रमध्ये मूलनक्षत्रे पुस्तकपूजा ॥ तत्र सच्छास्त्रपुस्तकेषु सरस्वतीभारत्यौ अभिमानित्वेन ध्यात्वा पुस्तकेषु तेजोमयीं प्रतिमां ध्यात्वा मुख्यप्राणं ध्यात्वा तत्र श्रीवेदव्यासं हयग्रीवं दत्तात्रेयं परशुरामं महिदासमैतरेयं च तत्तन्मंत्रैरावाह्य गृहा वै प्रतिष्ठासूक्तमिति प्रतिष्ठाप्य प्रत्यहं त्रिकालं शालग्रामा-

दभिः षोडशोपचारैः पूजयेत् ॥ एवं पुष्पमहानैवेद्यादिभिः सं-
पूज्य श्रवणादिभागे उत्तिष्ठब्रह्मणस्पते इति विसर्जयेत् ॥ मूले-
नावाहयेद्देवीं श्रवणादौ विसर्जयेदित्युक्तेः ॥ एवमाश्वयुजे मासि
नवम्यां सितपक्षके ॥ ग्रंथानेकत्र संस्थाप्य वस्त्रैराच्छाद्य सर्वशः ॥
व्यासं परशुरामं च पूजयेत्तत्र भक्तितः ॥ बदरिं जैमिनिं चैव
सुमंतं वैशंपायनं ॥ आश्मरथ्यं च पैलं च काशकृत्स्नं च लो-
मशं ॥ परीताँल्लोकपालेभ्यो यजेद्व्यासस्य शिष्यकान् ॥ इति ॥
आश्वयुजशुक्लनवमी मूलादिनक्षत्रत्रययुता उदये मुहूर्तत्रयाष्ट-
मीयुता चेन्महानवमी ॥ इयमेव नवमी पूर्वाण्हव्यापिनी मन्वादिः॥
अथ पारणा । प्रतिपदादिनवरात्रोपवासे सप्तम्यादित्रिरात्रोपवासे
वा दशम्यां पारणं॥ तिथिक्षयादावष्टोपवासेष्वऽपि दशम्यां पारणं।

तिथिवृद्ध्यादौ नवोपवासेषु तदा नवम्यां पारणं ॥ व्रतमध्ये सूतकादिप्राप्तावपि दशम्यां पारणं ॥ ब्राह्मणभोजनादिकं सूतकांते कार्यं ॥ एवं स्त्रियो रजोदर्शनेऽपि ज्ञेयं ॥ इयं दशमी विजयादशमी ॥ द्वितीयदिने श्रवणयोगाभावे पूर्वा । द्वितीयदिने उदयकाले श्रवणयुता दशमी चेत्परैव । विजयादशम्यामपराण्हकाले शमीपूजा कार्या ॥ तस्याः पूजाकालत्वात् ॥ दिनद्वये प्रदोषव्याप्तित्वे परा ॥ अपराण्हव्याप्तेराधिक्यात् । दिनद्वये अपराण्हस्पर्शे पूर्वा ॥ प्रदोषव्याप्तेः सत्वात् ॥ श्रवणयोगस्तु विशेषज्ञापकः ॥ दशम्यां तु नरैः सम्यक् पूजनीया पराहता ॥ ऐशानीं दिशमाश्रित्य अपराण्हे प्रयत्नतः ॥ उल्लंघयेयुः सीमानं तद्दिनर्क्षे ततो निरा इति ॥ इति स्कांदे ॥ ईषत्संध्याव्यतिक्रांतः किंचिदुद्रिक्तता-

रकः। विजयो नाम कालोऽयं सर्वकार्यार्थसिद्धिदः॥ उदये दशमी किंचित्संपूर्णैकादशी यदि ॥ श्रवणर्क्षे यदा काले सा तिथिर्विजयाभिधेति॥ पूजा प्रकारस्तु भविष्योत्तरे॥ शमीयुक्तं जगन्नाथं भक्तानामभयंकरं॥ अर्चयित्वा शमीवृक्षमर्चयेच्च ततः पुनरिति॥ मंत्रस्तु गोपथब्राह्मणे॥ अमंगलानां शमनीं शमनीं दुष्कृतस्य च॥ दुःस्वप्ननाशनीं धन्यां प्रपद्येऽहं शमीं शुभां॥शमी शमयते पापं शमीलोहितकंटका॥ धारिण्यर्जुनबाणानां रामस्य प्रियवादिनी॥करिष्यमाणयात्राया यथाकालं सुखं मया॥ तत्र निर्विघ्नकर्त्री त्वं भव श्रीरामपूजितेति॥ गृहीत्वा ह्यक्षतां सांद्रां शमीमूलगतां मृदं॥ गीतवादित्रनिर्घोषैरानयेत्स्वगृहं प्रति॥ ततो भूषणवस्त्राणि धारयेत्स्वजनैः सहेति॥ गृहमागत्य सर्वेषां नीराजनं कार्यं॥ तत्रमंत्रः। चतुरंगबलं

मह्यं निरनिष्टं व्रजत्विह ॥ सर्वत्र विजयो मेऽस्तु त्वत्प्रसादात्सुरे-
श्वरीति ॥ अस्यां दशम्यां मध्वजयंती ॥ स्कंद उवाच । प्रणवप्र-
भवा वेदाः स्वयंभूप्रभवं जगत् ॥ यथांभोजभवो ब्रह्मा तथैषा-
नंदसूस्तिस्थिः । विजयादशमी नाम यदि सूर्योदये भवेत् । बु-
धश्रवणसंयुक्ता जयंती जगदीशतुः ॥ स्कांदे । गोभिल उवाच ।
शुक्लाश्विनदशम्यां तु जयंती जगदात्मनः । पूर्णबोधमुनेः कार्या
कामितार्थप्रदायिनि ॥ सा च सूर्योदये ग्राह्या श्रेयस्कामेन सर्वदा ॥
अन्यथा नरकं याति यावदाभूतसम्प्लवम् ॥ अस्यां दशम्यां कार्ति-
कस्नानारंभः ॥ तत्र मंत्रः ॥ कार्तिकेऽहं करिष्यामीति । तिलामलक-
स्नाने तु तिलाः कृष्णेति ॥ आश्वयुजशुक्लैकादश्यां चैव पूजां कृत्वा
देवाग्रे दुग्धव्रतं समाप्य द्विदलव्रतसंकल्पः कार्यः ॥ फलानि बहु-

बीजानि धान्यानि द्विदलानि च ॥ कार्तिके वर्जयेत्तद्वत् द्विदलं बहुबीजकं ॥ माषमुद्गमसूराश्च चणकाश्च कुलित्थकाः ॥ निष्पावा राजमाषाश्च आढक्यो द्विदलं स्मृतं ॥ नूतनान्यऽपि जीर्णानि सर्वाण्येतानि वर्जयेत् ॥ बीजेनोत्पत्तिसमये शिलया भेदने तथा ॥ द्विदलं यत्र दृश्येत वर्ज्यं तद्द्विदलं स्मृतं ॥ कार्तिके वर्जयेत्तैलं कार्तिके वर्जयेन्मधु ॥ इति स्मृतिः ॥ अस्मिन्मासि उपवासकृच्छ्रचांद्रायणादिनियमाः कार्याः ॥ देवाग्रे दीपमाला आकाशस्य तुलस्याश्च दीपो देयः ॥ आश्विनशुक्लपूर्णिमायां आग्रयणेष्टिः कार्या ॥ तच्चाग्रयणं त्रेधा ॥ व्रीह्याग्रयणं यवाग्रयणं श्यामाकाग्रयणं चेति ॥ आपस्तंबोऽपि वर्षासु श्यामकैः शरदि व्रीहिभिर्वसंते यवैरिति ॥ तत्र श्यामाकाग्रयणमनित्यं ॥ द्वयमाहिताग्नेरनाहि-

तान्नेश्च नित्यं ॥ आश्विनकृष्णद्वादश्यां दीपावलीप्रारंभः ॥ आ-
श्विने कृष्णपक्षे तु द्वादश्यादिषु पंचसु ॥ तिथिपूक्तः पूर्वरात्रे नृणां
नीराजनं विधिः ॥ नीराजयेयुर्देवांस्तु विप्रान्गाश्च तुरंगमान् ॥ इ-
ति ॥ कार्तिकस्यासिते पक्षे त्रयोदश्यां निशामुखे ॥ यमदीपं
बहिर्दद्यादपमृत्युर्विनश्यतीति स्कांदे ॥ दीपमंत्रः ॥ मृत्युना पा-
शदंडाभ्यां कालेन श्यामलायुतः ॥ त्रयोदश्यां दीपदानात्सूर्यजः
प्रीयतामिति ॥ श्यामला यमभार्या ॥ आश्विनकृष्णचतुर्दश्यां
चंद्रोदये तैलाभ्यंगस्नानमवश्यं कार्यं ॥ आश्वयुक्कृष्णपक्षे च
चतुर्दश्यां विधूदये ॥ तिलतैलेन कर्तव्यं स्नानं नरकभीरुणेति
ब्राह्मे ॥ तैले लक्ष्मीर्जले गंगा दीपावल्याश्चतुर्दशीं ॥ प्राप्ये
ति शेषः ॥ प्रातःस्नानं तु यः कुर्याद्यमलोकं न पश्यतीति ॥ दि-

नद्वये चंद्रोदये चतुर्दशीसत्वे पूर्वा ॥ पूर्वविद्धा चतुर्दश्यामिति वच-
नात् ॥ एवं दिनद्वये तदभावे तु अरुणोदयव्यापिनी ग्राह्या ॥ प-
क्षे प्रत्यूषसमय इत्युक्तेः ॥ तदभावे चतुर्थयामगामिनी चतुर्द-
शी ग्राह्या ॥ तथा कृष्णचतुर्दश्यामाश्विनेऽर्कोदयात्पुरा ॥ यामि-
न्याः पश्चिमे यामे तैलाभ्यंगो विशिष्यत इति स्मृतेः ॥ तथा
चतुर्थयामे अरुणोदयचंद्रोदयव्याप्तचतुर्दशीनां उत्तरोत्तरं प्राब-
ल्यमित्युक्तं भवति ॥ त्रयोदशी यदा प्रातः क्षयं याति चतुर्द-
शी ॥ रात्रिशेषत्वभावः स्यात्तदाभ्यंगे त्रयोदशीति वचनं तु
चतुर्थयामे चतुर्दशी स्पर्शाभावे पूर्वदिने अभ्यंगविषयं ॥ तथा
इनोदयात्पूर्वं चंद्रोदयवेलायां चतुर्दश्यां तैलाभ्यंगः कार्यः ॥ अत्र

विशेषः । अपामार्गमथो तुंबीं प्रद्युम्नाख्यमथापरं ॥ भ्रामयेत्स्नानमध्ये तु नरकस्य क्षयाय वै ॥ तत्र मंत्रः । शितालोष्टसमायुक्त सकटंकदलान्वित ॥ हरपापमपामार्ग भ्राम्यमाणः पुनःपुनरिति ॥ ततो बहिर्गत्वा यमनामभिः सव्येन वापसव्येन वा तर्पणं कार्यं ॥ यमनामानि ॥ यमाय धर्मराजाय मृत्यवे चांतकाय च ॥ वैवस्वताय कालाय सर्वभूतक्षयाय च ॥ औंदुंबराय दध्नाय नीलाय परमेष्ठिने ॥ वृकोदराय चित्राय चित्रगुप्तात्मने नम इति ॥ जीवत्पिताऽपि कुर्वीत तर्पणं यमभीष्मयोरिति पाद्मे ॥ चतुर्दश्यादिदिनत्रये रात्रिमुखे देवालयादौ दीपोत्सवः कार्यः ॥ इति नरकचतुर्दशी ॥ भीष्मतर्पणं माघे वक्ष्यते ॥ आश्विनकृष्णचतुर्दश्या-

१ प्रद्युम्नाटमथापरमिति च पाठः ।

द्वितिथिषु यदा स्वातीयोगः तदाभ्यंगस्नानं लक्ष्मीकरं ॥ मुख्य-
तश्चतुर्दशीयुक्तविधूदयः ॥ तत्पंचत्वग्युक्तस्नाने फलविशेषः ॥
इति आश्वयुजमासः ॥ ॥ अथ कार्तिकमासः ॥ कार्तिकशु-
क्लप्रतिपदि पूर्वविद्धायां प्रातर्गोपूजा ॥ केवलप्रतिपदि अपरवि-
द्धायां अभ्यंगस्नानं ॥ नीराजनं ॥ रात्रौ दीपमाला कार्या ॥ चं-
द्रदर्शनानंतरं न कार्या ॥ अस्यामेव प्रतिपद्यपररात्रे गृहशाला-
मध्ये पंचरंगवर्णकैस्तंडुलैर्वा बलिमालिख्य सपरिवारं पूजयेत् ॥
तत्र मंत्रः ॥ बलिराज नमस्तुभ्यं दैत्यदानववंदित ॥ इंद्रसेनामरा-
राते विष्णुसांनिध्यदो भवेति पाद्मोक्तेः ॥ अत्र बलिमुद्दिश्य दी-
पगोदानादीनि कार्याणि । अत्र गोवर्धनपूजा द्यूतक्रीडा च
प्रातः कार्या ॥ अथ कार्तिकशुक्लद्वितीया यमद्वितीया ॥ अस्यां

भगिनीहस्तेन भोजनं नीराजनं च ग्राह्यं ॥ तस्याः वस्त्रालंकारादिभिः पूजा च कार्या ॥ तदभावे पितृव्यमातुलपितृष्वसृमातृष्वसृपुत्रीहस्तेन वा भोजनं कार्यं ॥ कार्तिकशुक्लनवमी कृतयुगादिः ॥ सा पूर्वाण्हिकी ग्राह्या ॥ कार्तिकशुक्लैकादशीमारभ्य पूर्णमासीपर्यंतं भीष्मपंचकं कार्यं ॥ तद्विधिस्तु तत्कथायां बोध्यः ॥ अत्र देवपूजांते द्विदलव्रतसमाप्तिः कार्या ॥ इयमेकादशी सोमवारोत्तराषाढयुता चेदनंतफलदा ॥ अस्यां द्वादश्यां वा पूर्वरात्रे देवं संपूज्योत्थापयेत् ॥ तत्र मंत्रः ॥ ब्रह्मेंद्ररुद्रेंद्रकुबेरसूर्यसोमादिभिर्वंदितवंदनीय ॥ बुध्यस्व देवेश जगन्निवास मंत्रप्रभावेन सुखेन देव ॥ इयं तु द्वादशी देव प्रबोधार्थं विनिर्मिता ॥ त्वयैव सर्वलोकानां हितार्थं शेषशायिना ॥ उत्तिष्ठोत्तिष्ठ गोविंद त्यज

निद्रां जगत्प्रभो ॥ त्वयि सुप्ते जगन्नाथ जगत्सुप्तं भवेदिदं ॥ उत्थिते चेष्टते सर्वं उत्तिष्ठोत्तिष्ठ माधव ॥ गता मेघा वियच्चैव निर्मलं निर्मला दिशः ॥ शारदानि च पुष्पाणि गृहाण मम केशव ॥ इदं विष्णुरिति प्रोक्तं मंत्रमुत्थापने हरेरिति ॥ एवं देवं समुत्थाप्य तदग्रे चातुर्मास्यव्रतसमाप्तिं कुर्यात् ॥ तदुक्तं भारते ॥ चतुर्धा गृह्य वै चीर्णं चातुर्मास्यव्रतं नरः ॥ कार्तिके शुक्लपक्षे तु द्वादश्यां तत्समापयेत् ॥ मंत्रश्च सनत्कुमारेणोक्तः ॥ इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो ॥ न्यूनं संपूर्णतां यातु त्वत्प्रसादाज्जनार्दनेति ॥ व्रतं शाकादितिलाभोजनादिनियमश्च ॥ इयं द्वादशी वेदनिधिस्वामिनां पुण्यतिथिः ॥ मन्वादिश्च ॥ इदं शुक्रास्तादावपि कार्यं ॥ आशौचे तु अन्येन कारयेत् ॥ कार्तिके

शुक्लचतुर्दशी वैकुंठसंज्ञा ॥ अत्र दंपतीभोजनं कार्यं ॥ सा नि-
शीथव्यापिनी ग्राह्या । दिनद्वये तद्व्याप्तौ निशीथप्रदोषोभय-
व्यापिनी ग्राह्या । उभयेद्युर्निशीथव्याप्त्यभावे तु परैवेति । अ-
स्यामेव विश्वेश्वरप्रतिष्ठादिनत्वात्तत्प्रीत्यर्थं यदोपवासादि क्रियते
तदाऽरुणव्यापिनी ग्राह्या तत्र त्रयोदशीयुतचतुर्दश्यामुपवासं कृत्वा
चतुर्दश्यामरुणोदये देव्या सह विश्वेश्वरं संपूज्य पारणं कुर्या-
दिति ॥ कार्तिकपूर्णिमा मन्वादिः ॥ इयं कृत्तिकायोगे महाका-
र्तिकीसंज्ञा ॥ अस्यां स्वामिकार्तिकेयदर्शनं महाफलप्रदं ॥ तथा भ-
रणीनक्षत्रयोगे रोहिणीयोगे च महाकार्तिकीत्युच्यते ॥ इयं म-
त्स्यजयंती च ॥ अस्यां त्रितंतुभिर्वर्तिकां कृत्वा दीपोत्सवः कार्यः॥
अत्र वृषोत्सर्गः प्रशस्तः ॥ कार्तिकबहुलचतुर्थी विद्यानिधिस्वा-

मिनां पुण्यतिथिः ॥ बहुलाष्टम्यां तु कालभैरवपूजा कार्या ॥ सा मध्यरात्रव्यापिनी ग्राह्या । एकादशी सत्यनाथतीर्थानां पुण्यतिथिः ॥ चतुर्दशी तु श्रीपद्मनाभतीर्थस्वामिनां पुण्यतिथिः ॥ इति कार्तिकमासः ॥ ॥ अथ मार्गशीर्षमासः ॥ शुक्लपंचम्यां तु नागपूजा कार्या ॥ सा परविद्धा कार्या ॥ षष्ठी तु चंपाषष्ठी ॥ सा परा ग्राह्या ॥ इयमेव स्कंदषष्ठीत्युच्यते । सा पूर्वयुता ग्राह्या । अत्र सुब्रह्मण्यक्षेत्रे स्कंदपूजा विशेषफलदा । शुक्लदशमी सत्यनिधितीर्थस्वामिनां पुण्यतिथिः ॥ एकादशी तु सत्यनाथतीर्थस्वामिनां पुण्यतिथिः ॥ मार्गशीर्षपौर्णमासी दत्तात्रेयजयंती ॥ मार्गे कृष्णप्रतिपदि रघुनाथमुनिस्वामिनां पुण्यतिथिः । पंचमी तु अक्षोभ्यतीर्थानां पुण्यतिथिः ॥ सप्तम्यादित्रयं तिस्राष्टकं ॥

धनुःसंक्रांतिमारभ्य मकरसंक्रांतिपर्यंतं अरुणोदये देवपूजां कृत्वा मुद्गान्नादि नैवेद्यं समर्प्य ब्राह्मणभोजनं कार्यं ॥ इति मार्गशीर्षमासः ॥ ॥ अथ पौषः ॥ तत्र शुक्लाष्टम्यां बुधवारश्चेत्तदा जपहोमब्राह्मणार्चनादिकं महाफलप्रदं ॥ रोहिणीयोगश्चेद्विशेषः ॥ दशम्यां माघस्नानारंभः ॥ पौषशुक्लैकादशी मन्वादिः ॥ रघूत्तमतीर्थस्वामिनां पुण्यतिथिश्च ॥ कृष्णसप्तम्यादित्रयं तिस्राष्टकं ॥ पौषकृष्णसप्तमी नरहरितीर्थानां पुण्यतिथिः ॥ कृष्णचतुर्दशी विद्याधीशस्वामिनां पुण्यतिथिः ॥ पौषामावास्यायां आदित्यवारे श्रवणव्यतीपातैर्दिवा योगे अर्धोदयपर्वकालः ॥ अमार्कश्रवणे पाते युक्ता चेत्पौषमाघयोः । अर्धोदयः सविज्ञेयो राहुपर्वशताधिक इति ॥ किंचिन्न्यूने महोदयपर्वकालः ॥ तस्यां

स्नानदानादिकं महाफलप्रदं ॥ इति पौषः ॥ ॥ अथ माघमासः॥ अत्र तिलामलकतुलसीमूलमृत्तिकाभिर्माघस्नानं कार्यं ॥ एवं-कार्तिके वैशाखेऽपि ॥ संपूर्णमाघे स्नानशक्तौ मकरसंक्रांतौ रथ-सप्तम्यां पूर्णिमायामिति ॥ दशम्यादिदिनत्रये वा त्रयोदश्या-दिदिनत्रये वा पौर्णमास्यां वावश्यं स्नानादिकं कार्यं ॥ शीतलो-दकस्नानाशक्तौ उष्णोदकस्नानं कार्यं॥ अत्र नियमः ॥ अग्निता-पनं अभ्यंगं परान्नं स्त्रीसंगादिकं न कार्यं ॥ त्रिभागतिलेषु चतुर्थ-भागशर्करां मिश्रीकृत्य माघमासे ब्राह्मणाय प्रत्यहं दातव्यं ॥ स्वे-नापि भक्षणीयं। तिलहोमश्च कार्यः॥ अत्र कंबलकंचुकपादुकोपा-नहवस्त्राग्नितापनादिदानं दंपतीभोजनादिकं कार्यं ॥ माघशुक्लसप्त-मी रथसप्तमी ॥ मन्वादिश्च। अत्र संतानाभिवृद्ध्यर्थं कूष्मांडदानं

सूर्यरथलेखनादिकं च कार्यं ॥ इयं अरुणोदयव्यापिनी ग्राह्या ॥
सूर्यग्रहणतुल्या तु शुक्के माघस्य सप्तमी ॥ अरुणोदयवेलायां
तस्यां स्नानं महाफलमिति विष्णुस्मृतेः ॥ सप्तार्कपर्णानि सप्त-
बदरीपत्राणि च सिरसि धृत्वा स्नात्वा सूर्यायार्घ्यं दीपं तिल-
पिष्टं च दद्यात् ॥ शुक्लाष्टमी भीष्माष्टमी ॥ अत्र भीष्मतर्पणं
कार्यं ॥ तर्पणमंत्रः ॥ भीष्मः शांतनवो धीरः सत्यवादी जितें-
द्रियः ॥ आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियां ॥ वैयाघ्र-
पदगोत्राय सांकृत्यप्रवराय च ॥ अपुत्राय ददाम्येतज्जलं भी-
ष्माय वर्मणे ॥ वसूनामवताराय शंतनोरात्मजाय च ॥ अर्घ्यं द-
दामि भीष्माय आबालब्रह्मचारिणे ॥ इति ॥ एतच्च जीवत्पितृके-
णापि सव्येन कार्यं ॥ माघशुक्लनवमी श्रीमदानंदतीर्थश्रीमच्च-

रणानां पुण्यतिथिः ॥ माघशुक्लद्वादशी भीमद्वादशी ॥ स्नान-
दानादिना अतिफलदा ॥ पौर्णमासी तु गुरुचंद्रयुक्ता मघायुक्ता
चेन्महामाघी ॥ तथा। मेषराशौ शनिश्चेत्स्यात्सिंहे च गुरुचंद्र-
योः ॥ भास्करश्रवणर्क्षे च महामाघी च सा स्मृता ॥ माघ-
कृष्णसप्तम्यादिदिनत्रयं तिस्राष्टकं ॥ इयं चाष्टमी सीताप्रादुर्भा-
वतिथिः ॥ अस्यां सीतापूजायां महाफलं ॥ माघकृष्णचतुर्दशी
महाशिवरात्रिः ॥ सा पूर्वविद्धा । अर्धरात्रव्यापिनी वार्षिकी शि-
वरात्रिः ॥ प्रतिमासं कृष्णचतुर्दशी प्रदोषव्यापिनी शिवरात्रिर्ज्ञे-
या ॥ दिनद्वयेऽर्धरात्रव्याप्तौ परा ॥ प्रदोषव्याप्तेराधिक्यात् ॥ प्र-
दोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी ॥ रात्रौ जागरणं य-
स्मात्तस्मात्तां समुपोषयेत् ॥ इति सामान्यवाक्यस्यैव तत्परत्वात् ॥

पारणं तु द्वितीयदिने चतुर्दशीमध्य एव ॥ नतु चतुर्दश्यंते । तिथीनामेव सर्वासामुपवासादिकं च यत् । तिथ्यंते पारणं कुर्याद्विना शिवचतुर्दशीमिति पर्युदासात् ॥ उपोषणं चतुर्दश्यां चतुर्दश्यां तु पारणं ॥ कृतैः सुकृतलक्षैश्च लभ्या चेदथवा न वा ॥ ब्रह्मांडोदरमध्ये तु यानि तीर्थानि संति वै ॥ संस्नातानि भवंतीह भूतायां पारणे कृते ॥ इति विशेषफलोक्तेश्च ॥ अयं तु निर्णयः शैवानां । न तु वैष्णवानां ॥ वैष्णवैस्तु तद्दिने पुराणप्रसिद्धशिवप्रतिमायां तदभावे वा शिवांतर्गतमुखप्राणांतर्गतसंकर्षणपूजा कार्या ॥ ब्राह्मणभोजनाद्युत्सवः कार्यः ॥ यास्त्वन्यदेवतिथयस्तासु विष्णुं प्रपूजयेदिति वराहपुराणोक्तेः ॥ उपवासो नैव कार्यः ॥ माघामावास्या युगादिः ॥ सा च धनिष्ठया शततारेण

युक्ता चेन्महाफलदा ॥ तस्यां पितृभ्यः तिलान्नदानं वर्षायुततृप्तिदं ॥ इति माघमासः ॥ ॥ अथ फाल्गुनमासः ॥ शुक्लषष्ठी सत्यव्रतस्वामिनां पुण्यतिथिः ॥ शुक्लत्रयोदश्यां प्रदोषव्यापिन्यां पौर्णमास्यां वा प्रदोषव्यापिन्यां भद्रारहितायां कामदहनं । द्वितीयदिने धूलिप्रक्षेपक्रीडा च ॥ पूर्णिमायां पोलिकादहनं च तत्तद्देशाचारतो ज्ञेयम् ॥ अत एव ॥ प्रदोषव्यापिनी ग्राह्या पूर्णिमा फाल्गुनी सदा ॥ तस्यां भद्रामुखं त्यक्त्वा पूज्या होला निशामुखे ॥ इति माधवादिलिखितानि वचनानि संति । तेषां निर्मूलत्वाभिप्राये प्रारंभकव्यवहारेण स्ववार्तिके होलिकाचारप्राप्तिरित्युक्तं ॥ होलायाः स्मृतिपुराणाद्युक्तत्वे तु आंध्रदेशे त्रयोदश्यां देशांतरे पौर्णमास्यामनुष्ठानं च न स्यात् ॥ नापि शिष्टाचारमूला

होलिका ॥ कामुकैरनुष्ठीयमानत्वेऽपि शिष्टैरननुष्ठितत्वात् ॥ इयं पूर्णिमा मन्वादिः ॥ इयं दोलापौर्णमासी च ॥ नरो दोलागतं दृष्ट्वा गोविंदं पुरुषोत्तमं ॥ फाल्गुन्या संयुतो भूत्वा गोविंदस्य पुरं व्रजेदित्युक्तेः ॥ फाल्गुनकृष्णप्रतिपदि वसंतोत्सवः ॥ सा चौदयिकी ग्राह्या । दिनद्वये तथात्वे पूर्वा ॥ तत्र चंदनेन सह चूतकुसुमं प्राश्यं ॥ फाल्गुनकृष्णद्वितीया चातुर्मास्यद्वितीया ॥ अस्यां अनध्यायः ॥ गर्गः । शुचावूर्जे तपस्ये च या द्वितीया विधूक्षिताः ॥ चातुर्मास्यद्वितीयास्ताः प्रवदंति महर्षय इति ॥ सप्तम्यादिदिनत्रयं तिस्राष्टकं ॥ अमावास्या मन्वादिः ॥ इति फाल्गुनमासः ॥
॥ इति श्रीमच्छलकुलकरिकुंभविदारिभिः ॥ पूर्णः कालतरंगो

ऽभूत्कृते स्मृत्यर्थसागरे ॥ श्रीनरसिंहाचार्यकृते स्मृत्यर्थसागरे कालतरंगः समाप्तः ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ छ ॥ ॥ छ ॥





श्रीवेदव्यासाय नमः ॥ ॐ ॥ अथाशौचं निर्णीयते ॥ आशौचं द्विविधं ॥ सूत्याशौचं मृताशौचं चेति ॥ तत्र आचतुर्थाद्भवेत्स्रावः पातः पंचमषष्ठयोः ॥ अत ऊर्ध्वं प्रसूतिः स्यात्स्रावे मातुस्त्रिरात्रकं ॥ पाते मातुर्यथामासं सपिंडानां दिनत्रयं ॥ अत्र विशेषः ॥ गर्भस्रावे प्रथममासत्रये मातुः रजस्वलावद्दिनत्रयं सूतकं ॥ स्रावे तु सपिंडानां सूतकाभावः ॥ सद्यः शौचं सपिंडानां गर्भस्य पतने भवेदित्युक्तेः ॥ सपिंडानां स्नानं विवक्षितं ॥ अकरणे शुद्धेरभावात् ॥ एवमुत्तरत्रापि संबंधः ॥ शौचशब्देन स्नानमात्रं ग्राह्यं ॥ ज्ञातीनां त्रिरात्रमाशौचं तु । अजातदंते तनये शिशोर्गर्भच्युते तथा ॥ सपिंडानां तु सर्वेषामेकरात्रमशौचकमिति यमोक्तया संनिहितानां त्रिरात्रं व्यवहितानामेकरात्रमिति व्यवस्था

सा विकल्प्यते ॥ सप्तममासादौ तु प्रसूतिः ॥ तदा दशरात्रं सूतकं ॥ इदं सर्ववर्णविषयं ॥ सूत्याशौचे विशेषस्तु ॥ जातो विप्रो दशाहेन द्वादशाहेन भूमिपः ॥ वैश्यः पंचदशाहेन शूद्रो मासेन शुध्यतीति स्मृत्युक्तो ज्ञेयः ॥ जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते ॥ ब्राह्मणादित्रिवर्णा स्त्री दशाहमस्पर्शा ॥ शूद्री तु त्रयोदशाहं ॥ ततः परेऽन्हि स्नानात् स्पृश्या ॥ सूतिकास्त्रीव्यतिरिक्तज्ञातीनां स्पर्शे तु न दोषः ॥ सूतिकास्पर्शे तु रजस्वलास्पर्शवत् सचैलस्नानं ॥ अन्यगोत्रजानां सूतिकिभिः सह शयनभोजनकरणे तत्समं सूतकं ॥ यस्तैः सह सपिंडोऽपि प्रकुर्याच्छयनासनं ॥ बांधवो वा परो वापि स दशाहेन शुध्यतीत्युक्तेः ॥ जनकस्य तु पुत्रजन्मश्रवणानंतरं स्नानपर्यंतमस्पर्श्यत्वं ॥

मातुः पुत्रजनने दशाहानंतरं स्पर्श्यत्वेऽपि विंशतिदिनपर्यंतं सत्कर्मानधिकारः ॥ कन्याजनने तु त्रिंशद्दिनपर्यंतं ॥ यदि माता पुत्रवती विंशाहोभिर्विशुध्यति ॥ मासेन कन्याजननी ततः कर्माणि कारयेदित्युक्तेः ॥ दशाहमध्येऽपि पितुः प्रथमदिवसे षष्ठे दशमे चैव ब्राह्मणेभ्यो दानादौ सूतकाभावः ॥ प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा ॥ त्रिष्वेतेषु न कुर्वीत सूतकं पुत्रजन्मनि ॥ देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनि ॥ आयांति तस्मात्तदहः पुण्यं षष्ठं च सर्वदेत्युक्तेः ॥ पुत्रशब्दोऽपत्यमात्रपरः ॥ अत्र विशेषः ॥ दशाहसूतकं तु ॥ सपिंडानां सप्तपुरुषमध्यस्थानां ॥ ततः परे चतुर्दशपुरुषपर्यंतं सप्तपुरुषस्थाः सोदकाः ॥ तेषां त्रिदिनमाशौचं ॥ चतुर्दशपुरुषेभ्यः परे सप्तपुरुषस्थाः ते गोत्रजाः ॥ तेषां

तु एकाहं सूतकं ॥ मृताशौचमप्येवमेव ज्ञेयमिति ॥ पुत्रजन्मसपिं
डानां दशाहाच्छुद्धिरिष्यते ॥ त्र्यहादेकोदकानां च गोत्रजानामह्नः
स्मृतमित्युक्तेः ॥ इदं तु स्त्रीप्रसवेऽपि समं ॥ अपुत्राणां यथा
स्त्रीणां सपिंडं साप्तपौरुषं ॥ प्रेतानां भर्तृसापिंड्यं प्राह देवः प्रजापतिः
॥ इति कौर्मोक्तेः ॥ अथ जननानंतरं नाभिच्छेदात्पूर्वं शिशौ
मृते पितुः सर्वेषां ज्ञातीनां त्रिदिनं सूतकं ॥ मातुस्तु दशाहं
सूतकं ॥ नाभिच्छेदात्परतः मृतौ च मृतस्य शिशोः प्रसवे च
पितृमात्रादिसर्वेषां सूतकं दशाहं ॥ एतस्मिन्प्रसवाशौचे ज्ञातीनां
शिशुमरणनिमित्तं स्नानमात्रं च ॥ दशाहमध्ये मृतौ ज्ञातीनामुर्वरितदिनैर्जाताशौचशुद्धिः
दशाहाभ्यंतरे बाले प्रमृते तस्य बांधवैः
॥ शावाशौचं न कर्तव्यं सूत्याशौचं विधीयते ॥ इति बृहन्मनूक्तेः॥

॥ अथ मृताशौचं ॥ ततः दशाहानंतरं नामकरणात्पूर्वं ज्ञातीनां स्नानमात्रं ॥ प्राक्चूडाकरणाद्बालः प्राग्दंतजननाच्छिशुः॥ आपंचवर्षात्कौमारः पौंगंडो नवहायनः। शिशौ मृते दुग्धदानं भूमौ बाले तु पायसं ॥ यत्र प्रम्रियते बालस्तत्र दीपः प्रदीयते ॥ अन्नं समानवयसां तद्वस्त्रादीनि दापयेत् ॥ भूमौ निक्षेपणस्थाने दुग्धपायसदापनं ॥ तदुत्तरं दंतजननात्पूर्वं दाहे कृते अहोरात्रं ॥ अदंतजातें तनये शिशौ गर्भच्युते सति ॥ सपिंडानां तु सर्वेषामहोरात्रमशौचकमिति यमोक्तेः॥ दाहाभावे तु स्नानमात्रं अदंतजाते प्रेते सद्य एव नास्याग्निसंस्कार इति विष्णुः ॥ दाहाभावे स्नानमात्रोक्तेः ॥ आदंतजन्मनः सद्य आचूडान्नैशिकी स्मृता । त्रिरात्रमाव्रतादर्वाग्दशरात्रमतः परमिति याज्ञल्क्योक्तेश्च ॥ आ-

चूडात् चौलकर्मणः प्राक् ॥ नैशिकी अहोरात्रं आव्रतादु-
पनयनात्पूर्वं त्रिदिनं ॥ अतःपरं उपनयनानंतरं दशरात्रं दा-
हविकल्पं चाह ॥ लौगाक्षिः । तूष्णीमेवोदकं कुर्यात्तूष्णींसं-
स्कारमेव च ॥ सर्वेषां कृतचूडानामन्यत्रापीच्छया द्वयमिति ॥
तूष्णीं मंत्रं विना । संस्कारं अग्निसंस्कारं ॥ कृतचूडानां कृ-
तचौलकर्मणां । बालानां मंत्रं विनैव अग्निसंस्कारं कृत्वा प्रेतना-
म्ना मंत्रं विनैवोदकं च देयं॥ अन्यत्र चौलकर्माभाव इच्छाचेद्द्वयं॥
अग्निसंस्कारोदकदानं कार्यं ॥ इच्छाभावे न कार्यमिति स्मृति-
वाक्यार्थः ॥ दहनाभावे तु द्विवर्षपर्यंतं खननमेव ॥ ऊनद्विवर्षं
निखनेदित्युक्तेः ॥ मृतस्य बालस्य शवं घृतेनाभ्यज्य स्नापयित्वा
वस्त्रेण वेष्टयित्वा भूमौ निक्षिपेत् ॥ वर्षद्वयात्परतो दाह एव ॥ प्र-

थमवर्षादौ कृतचूडस्य दाहोदकदानं त्र्यहः सूतकं च । तृतीय-
वर्षेऽपि अकृतचूडस्य दाहः ॥ त्र्यहः सूतकं च ॥ एषामनुगमनं
च । भूमौ तिलकुशैर्विना पिंडदानं च कार्यं ॥ उदकं पिंडदानं
च कृतचूडे विधीयत इत्युक्तेः ॥ उदकशब्दो दाहोपलक्षकः ॥
चूडाशब्दः तृतीयवर्षोपलक्षकः ॥ एतत्सर्वं सपिंडानां ॥ माता-
पित्रोस्तु दशाहोर्ध्वमुपनयनपर्यंतं त्रिरात्रमेव ॥ दंतजाते शूद्रे तु
पंचरात्रः ॥ ततः पूर्वं त्र्यहः ॥ शूद्रे त्रिवर्षन्यूने तु मृतशुद्धिस्तु-
पंचभिः ॥ अत ऊर्ध्वं मृते शूद्रे द्वादशाहो विधीयते । विवाहो-
र्ध्वं षडब्दाद्वा मृते शूद्रे तु मासतः ॥ इति स्मृतिः ॥ कन्यायां
तृतीयवर्षात्प्राक् मृतायां ज्ञातीनां स्नानमात्रं ॥ आचूडायां तु
कन्यायां सद्यः शौचं विधीयत इत्यापस्तंबोक्तेः ॥ अजातदंता-

यास्तु मातापित्रोरेकाहः ॥ ततः परं त्र्यहमिति माधवः ॥ चौलो-
त्तरं वाग्दानात्पूर्वं तु मृतायां सपिंडानां एकाहः ॥ वाग्दानानंतरं
विवाहात्पूर्वं तु मृतायां पितृकुले भर्तृकुले त्रिरात्रं ॥ अवारिपूर्वं
प्रेतात्तु या नैव प्रतिपादिता ॥ असंस्कृता तु सा ज्ञेया त्रिरात्रमु-
भयोः स्मृतमिति मरीच्युक्तेः ॥ कन्यायां विवाहात्पूर्वं रजस्व-
लायां तु पितुर्मातुर्यावज्जीवमाशौचं ॥ पितृवेश्मनि या नारी
रजः पश्यत्यसंस्कृता ॥ तस्यां मृतायां नाशौचं कदाचिदपि शा-
म्यति ॥ इत्युक्तेः ॥ कन्यायां विवाहानंतरं पितृकुले नाशौचं ॥
मातापित्रोस्तु त्रिरात्रं ॥ दंतजननानंतरं विवाहात्पूर्वमपि कन्यायाः
पितृगेहे प्रसवेऽपि मातापित्रोस्त्रिरात्रमाशौचं ॥ भ्रातुस्त्वेक-
रात्रं ॥ दत्ता नारी पितुर्गेहे सूयेताथ म्रियेत वा ॥ तद्बंधुवर्गस्त्वेकेन

शुध्येत्तज्जनकस्त्रिभिरिति ब्राह्मोक्तेः ॥ अथ ज्ञात्याशौचं ॥ दश-
रात्रमतः परमित्युक्तेः । आशौचं ब्राह्मणादीनामुपनयनानंतरं प्र-
वर्तते ॥ तत्रापि विशेषः ॥ क्षत्रस्य द्वादशाहानि विशः पंचदशैव
तु ॥ त्रिंशद्दिनानि शूद्रस्येति याज्ञवल्क्योक्तेः ॥ मातापित्रोर्मरणे
पुत्रस्य द्वादशाहपर्यंतं दानाध्ययनादि वर्ज्यं ॥ और्ध्वदेहिकनि-
मित्तं तु दानं विशेषविहितत्वात्कर्तव्यमेव ॥ ज्ञातीनां तु दशाहमात्रं
दानादि वर्ज्यं ॥ प्रसवान्मरणाच्च पूर्वसंकल्पितानां द्रव्याणां दानं
तु कार्यमेव ॥ इति सगोत्राशौचं ॥ अथासगोत्राशौचं ॥ स्व-
पुत्र्याः पतिगेहे प्रसवे तु पित्रादीनामाशौचं नास्ति ॥ दत्ता नारी
पितुर्गेहे इति विशेषणात् ॥ पुत्र्याः पितृगेहादन्यत्राऽपि मृतौ मा-
तापित्रोस्त्रिरात्रमाशौचमस्त्येव ॥ बैजकादभिसंबंधादनुरुध्यादघं

त्र्यहमिति स्मृतेः ॥ बैजकादभिसंबंधाद्रेतोरूपबीजसंबंधात्तु त्र्यहं त्रिदिनं ॥ अघं सूतकं । पिता माता च अनुरुध्यात् कुर्यादिति स्मृत्यर्थः ॥ मातापित्रोर्मृतौ पुत्रीणां त्रिरात्रं ॥ पुत्री गेहेऽथवान्यत्र पितरौ प्रमृतौ यदि ॥ पुत्र्यास्त्रिदिनमाशौचं दशाहाभ्यंतरं भवेत् ॥ दशाहानंतरं पुत्री पक्षिण्याशौचभाग्भवेत् ॥ मातुः सपत्न्यां तुल्यायां मातुलान्यामहो भवेदिति ॥ भगिन्याः भ्रातुर्गृहे मृतौ भ्रातुस्त्रिरात्रं ॥ अन्यत्र मृतौ पक्षिणी ॥ दौहित्रे भागिनेये च श्वशुरयोश्च पक्षिणी ॥ जामातरि च मातामहे मातामह्यां पितृष्वसामातृष्वस्रोर्मातुलमातुल्योश्च स्वगृहे त्रिरात्रं ॥ अन्यत्र पक्षिणी ॥ एकरात्रं ॥ तथा शालके वैष्णवे देशाधिपतौ ग्रामाधिपतौ च एकरात्रं ॥ तथा यत्किंचिच्छरीरसंबंधे सति सचैलं स्ना-

नमात्रं ॥ बंधुत्रये च स्वगृहे त्रिरात्रं ॥ अन्यत्र चैकरात्रं ॥ बंधु-
त्रयं ॥ तु आत्मभगिनी तत्पुत्रादयः आत्मबांधवाः ॥ पितृष्वसा
तद्भर्ता तत्पुत्राः पितृबांधवाः ॥ मातृष्वसृतद्भर्ता तत्पुत्रा मातु-
लमातुलान्यश्च मातृबांधवाः ॥ असपिंडे स्ववेश्मनि मृते गृह-
स्वामिन एकरात्रं ॥ गृहमध्ये तु मृतौ तु तद्गृहस्थौ मृन्मयजीर्ण-
भांडानि पक्वान्नं च त्यक्त्वा गोमयेनानुलिप्य कुशोदकैर्गायत्र्या-
दिमंत्रैः ब्राह्मणैः प्रोक्षयेत् ॥ ग्राममध्ये यावच्छवस्तिष्ठति ताव-
त्पर्यंतं आशौचं ॥ निर्गते शुचितामियात् ॥ असपिंडस्यापि और्ध्व-
दैहिकक्रियाकर्तुर्दशाहमाशौचं ॥ संध्यावंदनादीनां न लोपः ॥ श-
वस्पर्शे तु दिवा चेन्नक्षत्रदर्शनानंतरं स्नानेन शुद्धिः ॥ रात्रौ चे-
दादित्यदर्शनानंतरं ॥ सूतकिभिः सह वासे अनापदि तदन्नाशने

तत्समं सूतकं ॥ तथापि संध्यावंदनौपासनादिकं तु कार्यमेव ॥ तदुक्तं ॥ आशौचं यस्य संसर्गादापतेद्गृहमेधिनः । क्रियास्तस्य न लुप्यंते गृह्याणां च न तद्भवेत् ॥ गृह्याणां औपासनादीनां । तत्तु लोपादिकं न भवेत् ॥ जननान्मरणाद्वा पूर्वसंकल्पितद्रव्यस्य भोजने तु न सूतकं ॥ यद्यसगोत्रः स्नेहेन मौल्येन वा प्रेतदाहादिकं कृत्वा दशाहादि कर्म कुर्यात्तस्य दशाहः सूतकं ॥ धर्मार्थं दाहादौ तु प्रेतसंस्पर्शसंस्कारैः ब्राह्मणो नैव दुष्यति ॥ ओढा चैवाग्निदाता च सद्यः स्नानेन शुध्यति ॥ अनाथप्रेतसंस्कारात्कोटियज्ञफलं लभेत् ॥ इति स्मृतेः॥ यत्तु वृद्धात्रिः स्पर्शदोषे विशेषमाह ॥ सूतकाद्द्विगुणं शावं शावाद्द्विगुणमार्तवं ॥ आर्तवाद्द्विगुणा सूतिस्ततोऽपि शवदाहक इति ॥ सूतकात् जननसूतकात् ॥ शावं

मृतसूतकं । द्विगुणं स्पर्शनेन द्विगुणदोषापादकं ॥ एवमुत्तरत्र ॥ आर्तवं रजस्वलात्वं ॥ सूतिः प्रसविनी ॥ शवानुगमने तु पुनः-स्नानं कार्यं ॥ अथ रात्रौ जनने मरणे रजस्वलायां वा रात्रिं त्रि-भागीकृत्य आद्यभागद्वये चेत्पूर्वदिनं ॥ अंत्यतृतीयभागे तु पर-दिनं ॥ आहिताग्निव्यतिरिक्तस्य मरणदिनमारभ्य ज्ञातीनामा-शौचं ॥ आहिताग्निः प्रवासे मृतश्चेत्तत्रामंत्रकं दग्ध्वा यदाग्निहो-त्रस्थंडिले विधिना पुनर्दाहः क्रियते तदा ज्ञातीनां तद्दिनमारभ्य सूतकं ॥ अथातिक्रांताशौचं ॥ तत्र दशाहाद्याशौचमध्ये ज-नने मरणे च ज्ञाते तच्छेषेण शुद्धिः । विगतं तु विदेशस्थं शृणु-याद्यो ह्यनिर्दशं ॥ यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत् ॥ इति-मनूक्तेः । विगतं मृतं ॥ इदं तु पुत्रज्ञात्यादिसाधारणं । पितरौ

चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः ॥ श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत् ॥ इति वचनं तु दशाहानंतरश्रवणपरं ॥ जनने मरणे वा प्रथमदिनादूर्ध्वं ज्ञाते पुत्रादीनां शेषेणैव शुद्धिरिति स्मृत्यर्थसारषडशीत्यपराकोक्तेः ॥ दशाहादूर्ध्वं श्रवणे ज्ञातीनां सूतकं तु । मासत्रये त्रिरात्रं स्यात्षण्मासे पक्षिणी भवेत् ॥ अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुध्यतीति स्मृत्युक्तं ज्ञेयं ॥ जनने त्वतिक्रांताशौचं नास्त्येव ॥ नाशुद्धिः प्रसवाशौचे व्यतीतेषु दिनेष्वपीति देवलोक्तेः । पितुस्तु स्नानमात्रं । निर्दशज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च ॥ सवासा जलमाप्लुत्य शुद्धो भवति मानव इति मनूक्तेश्च ॥ इदं त्रिरात्राद्याशौचं एकदेशे । देशांतरे तु स्नानमात्रं ॥ दशभेदस्तु यत्र भाषाभेदः

भागीरथीगोदावरीकृष्णाकावेर्यादिमहानदीव्यवधानं महापर्वतव्यवधानं विंध्यवेंकटाद्रिश्रीशैलादिव्यवधानं त्रिंशद्योजनव्यवधानं वा बोध्यं ॥ केचित्तु बृहस्पतिरपि । देशभेदो नदीभेदो निकटेऽपि भवेद्यदि ॥ न तु देशांतरं प्रोक्तं स्वयमेकं स्वयंभुवा ॥ तदेवं स्मृत्यंतरे विवृतं ॥ नद्यंतरे च भिन्नाद्रौ अंतरं योजनत्रयं ॥ तत्र स्नानेन शुद्धिः स्यादिति प्राहुर्मनीषिण इति ॥ दशाहमध्ये श्रुतं चेद्देशभेदेऽपि शेषदिवसेभ्य एव शुद्धिः ॥ इदं तु मातापितृव्यतिरिक्तविषयं ॥ पुत्रस्य मातापितृमरणश्रवणे देशांतरे कालांतरेऽपि श्रवणादिदशाहांतं संपूर्णमस्त्येव ॥ एवं दंपत्योः परस्परं ॥ सपत्नीषु च ॥ सापत्न्यमातरस्तु ॥ पितृपत्न्यामतीतायां मातृवच्च द्विजोत्तमः ॥ संवत्सरे व्यतीतेऽपि त्रिरात्रम-

शुचिर्भवेदित्युक्तेः कालांतरे देशांतरेऽपि त्रिरात्रं ॥ अथाशौचसंपाते विशेषः ॥ तत्र यदा एकस्मिन्नेव दिने सूतके सूतकं मृतके मृतकं समं प्राप्तं तत्र तंत्रेण उभयोः शुद्धिः ॥ यदा तु द्वितीयादिदिनेषूत्तरं । जातसूतकं जातसूतके मृतके मृतकं वा स्यात्समं न्यूनं वा तदा पूर्वशेषेणैव शुद्धिः ॥ अंतरा जन्ममरणशेषाहोभिर्विशुध्यतीति याज्ञवल्क्योक्तेः ॥ अंतरा मध्ये ॥ ज्ञाते इति शेषः ॥ ज्ञातस्यैव जननादेराशौचनिमित्तत्वात् ॥ अज्ञातेनैव दोषः स्याच्छ्राद्धादिषु कथंचनेत्युक्तेः ॥ पूर्वोत्पन्नाशौचस्य संपूर्णचरणानंतरं पूर्वाशौचमध्योत्पन्नस्यापि श्रवणे उत्तरमप्युर्वरितं कार्यमेव ॥ त्र्यहाद्यल्पाशौचमध्ये दशाहादिमहाशौचप्राप्ते उत्तरेणैव शुद्धिः ॥ न पूर्वशेषेण ॥ समाने आशौचसंपाते प्रथमे स-

मापयेत् ॥ असमानं द्वितीयेन धर्मराजवचो यथेति शंखोक्तेः ॥
असमानं अधिकाशौचमिति शेषः ॥ यदा जातसूतके शावं समं
न्यूनमधिकं वा तदा जाताशौचशेषाच्छावाशौचस्य न शुद्धिः॥
मृतेन शुद्ध्यते शावं न मृतं जातकेन तु ॥ इत्युक्तेः ॥ अतो य-
दा दशाहजननमध्ये तदंते वा त्र्यहादि शावं तदा पूर्वेण न शुद्धिः॥
मरणोत्पत्तियोगे तु गरीयो मरणं भवेदित्युक्तेश्च ॥ अथ त्र्य-
हाद्यल्पशावाद्याशौचमध्ये सजातीयं विजातीयं दीर्घकालमुत्तरमा-
शौचं प्राप्तं तदोत्तरमाशौचं पूर्णं कार्यं न पूर्वेण शुद्धिः ॥ स्वल्पाशौ-
चस्य मध्ये तु दीर्घाशौचं भवेद्यदि ॥ न पूर्वेण विशुद्धिः स्यात्स्वका-
लेनैव शुध्यतीत्युशनसोक्तेः ॥ तेन त्र्यहादिशावमध्ये दशाहादिसूतके
न पूर्वेण शुद्धिः ॥ शावाशौचकाले तु शावनिमित्तमस्पृश्यत्वं भव-

त्येव॥ गुरुणा लघु शुध्येत लघुना नैव तद्गुरु इत्युक्तेः ॥ गुरुणा बहुकालाशौचेन लघु स्वल्पकालाशौचं शुध्येदित्यर्थः॥ स्वभाव-बहुसूतिस्तु न्यूनशावविशोधनी ॥ बहुसंख्यादिनं यत्तु तत्स्वभा-वबहूच्यते ॥ लघुना त्र्यहादिलघुकालाशौचेन । गुरु दशाहा-द्याशौचं न शुध्येदित्यर्थः ॥ क्वचित्तु पूर्वशेषेण शुद्धेरपवादमाह॥ शातातपः ॥ रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहादि-ति ॥ रात्रिशेषस्तु दशमरात्रं त्रिभागं कृत्वा यस्तृतीयो भागः स ज्ञेयः ॥ तत्र पूर्वभागद्वये आशौचांतरप्राप्तौ पूर्वाशौचे न उत्त-राशौचशुद्धिः॥तृतीयभागमध्येऽपि॥चतुर्थयामात्पूर्वभागे द्व्यहाच्छु-द्धिः॥ चतुर्थयामे तु त्र्यहाच्छुद्धिरिति भावः॥ इदं तु शावांते शावस्य सूतकस्य वा पाते सूतकांते च तुल्यं ॥ रात्रिशेषे त्रिरात्रिपक्षिण्या-

द्याशौचप्राप्तौ तु पूर्वाशौचेनैव शुद्धिः ॥ रात्रिशेषे द्विरात्रत्रिरात्रवृ-
द्धेः दशाहविषयत्वात् ॥ रात्रिशेषे द्व्यहाच्छुद्धिरित्यादौ दशाहाशौ-
चप्रकरणात् ॥ अपवादाभावे उत्सर्गप्रवृत्त्या शेषतः शुद्धेरेव प्रा-
प्तत्वात् ॥ पूर्वाशौचांतर्धितद्वित्रिदिनाशौचमध्ये दशाहाद्यधिका-
शौचपाते तु वर्धितद्वित्र्यहाद्याशौचस्याऽल्पत्वाद्यधिकाशौचेनैव
शुद्धिः ॥ तस्य द्व्यहाद्याशौचस्य पूर्वशेषत्वं ॥ अत्र रात्र्यशेषे
शुद्ध्यपवादत्वेन नैमित्तिकत्वात् ॥ अपवादाभावे उत्सर्गस्यैव प्रा-
प्तेः ॥ अथावांतरविशेषाः कथ्यंते ॥ तत्र शंखः ॥ मातर्यग्रे प्र-
मीतायामऽशुद्धौ म्रियते पिता । पितुः शेषेण शुद्धिः स्यान्मातुः
कुर्यात्तु पक्षिणीमिति ॥ अस्यार्थः ॥ मातुराशौचमध्ये पितामृत-
श्चेन्मात्राशौचेन पित्राशौचं न गच्छति ॥ संपूर्णपित्राशौचं पुत्रे-

ण कार्यमेवेति पादत्रयार्थः ॥ चतुर्थपादस्यायमर्थः ॥ पित्राशौच-
मध्ये मातृमृतौ पित्राशौचांते मातुः पक्षिणीमधिकां कुर्यादिति ॥
अनेनैव न्यायेन सपिंडाद्याशौचेन मातापित्राशौचापगमो नास्त्ये-
वेति ज्ञेयं ॥ एवं भर्तृपत्न्योः परस्परमपि ॥ इयं तु पक्षिणी दश-
मदिनात्पूर्वं मातुर्मरणे ज्ञेया ॥ आद्यश्राद्धमशुद्धोऽपि कुर्यादेका-
दशाहनीति ॥ दशमे दिवसे अर्धरात्रात्परतः तत्प्रभाते वा मातु-
र्मरणे पूर्वोक्तं द्व्यहं त्र्यहं वा सूतकं ज्ञेयं । विशेषोक्तेः प्राबल्यात् ॥
मातुः पत्या सह गमने तु न पक्षिणी ॥ मृतं पतिमनुव्रज्य प-
त्नी चेदनलं गता ॥ न तत्र पक्षिणी कार्या पैतृकादेव शुध्यतीत्युक्तेः॥
पुत्रोऽन्यो वाग्निदस्तस्यास्तावद्वाशुचिस्तयोः ॥ न च श्राद्धं च
पिंडं च युगपत्तु समापयेत् ॥ आशौचे तु समुत्पन्ने पुत्रजन्म यदा

भवेत् ॥ कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुध्यतीति प्राजा-
पत्यस्मृतिः ॥ जननांतर्दशाहस्य मध्ये स्यान्मरणं यदि ॥ प्रेतमुद्दि-
श्य कर्तव्यं पिंडदानं यथाविधि ॥ प्रारब्धे प्रेतपिंडे तु मध्ये वा
जननं भवेत् ॥ तथैवाशौचपिंडांस्तु शेषान्दद्याद्यथाविधीति शाता-
तपः ॥ मातुः पक्षिणीमध्ये पितुरेकादशाहं कुर्यात् ॥ आद्यश्राद्ध-
मशुद्धोऽपि कुर्यादेकादशाहनीत्युक्तेः ॥ अथाशौचापवादः ॥ ना-
शौचं कीर्तितं सद्भिः पतिते च तथा मृते इत्युक्तेः ॥ प्रथमपादत्रये
आशौचं ज्ञातिसूतकं ॥ मृतकं चेत्यर्थः ॥ चतुर्थपादे तु ज्ञातीनामिति-
शेषः ॥ पतितव्यतिरिक्तानां पित्रादीनां विषये तु सूतकाद्यस्त्येव ॥
मातापित्रोर्गुरोश्चैव बटुर्निर्हरणादिकं ॥ कुर्यान्मातामहस्यापि व्रती
न भ्रंश्यते क्वचिदित्युक्तेः ॥ पित्राद्यंतकर्मकरणकाले ब्रह्मचारिणा

संध्यावंदनाग्निकार्यादिकं कार्यमेव ॥ नत्यजेत्सूतके कर्म ब्रह्मचारी स्वकं क्वचिदिति छंदोगपरिशिष्टात् ॥ ब्रह्मचारिणा दशदिनपर्यंतं ज्ञात्यन्नं न भोक्तव्यं ॥ नच तैः सह संवासः कार्यः ॥ बटुः पतति ज्ञात्यन्नं भुक्त्वा तस्मान्न भक्षयेत् ॥ अन्यत्र भोजनं कुर्यान्न च तैः सह संवसेत् ॥ यदि कुर्याच्चरेत्कृच्छ्रं पुनः संस्कारमर्हतीति ब्राह्मोक्तेः ॥ तथा गृहस्थादीनां रोगदुर्भिक्षाद्युपद्रववतां नाशौचं ॥ सद्यः शौचं समाख्यातं दुर्भिक्षे वाप्युपद्रवे ॥ तथाहवहतानां च विद्युता पार्थिवैर्द्विजैरिति कौर्मोक्तेः ॥ दक्षिणोऽपि ॥ स्वस्थकाले त्विदं सर्वं सूतकं परिकीर्तितं ॥ आपद्गतस्य सर्वस्य सूतके न च सूतकमिति ॥ पूर्वोक्तं दशाहशावादि ॥ अन्नसत्रकर्तृणां अन्नदानादिव्रतिनां तन्नियतं सद्वृत्यानां यज्ञदीक्षितानामृत्विक्कर्म कुर्वतां

स्वदेशभ्रष्टानां वेदपारायणकर्तॄणां वैद्यानां रजकतक्षादीनां च स्व-स्वकर्मकरणे नाशौचं ॥ तथा चौलोपनयनयज्ञविवाहश्राद्धपुरश्च-रणादिजलतीर्थयात्रातुलापुरुषादिदानयुद्धदेवताप्रतिष्ठारथोत्सवेषु सर्वेष्वारब्धेषु प्राप्तमाशौचं तत्समाप्तिपर्यंतं न भवति ॥ व्रतयज्ञविवाहेषु श्राद्धे होमार्चने जपे ॥ आरब्धे सूतकं न स्यादना-रब्धे तु सूतकं ॥ प्रारंभो वरणं यज्ञे संकल्पो व्रतसत्रयोः ॥ नांदी-श्राद्धं विवाहादौ श्राद्धे पाकपरिक्रियेति स्मृतिः ॥ वरणं वराणां अध्वर्य्वादिऋत्विजां ग्रहणं ॥ यज्ञे प्रारंभकाल इत्यन्वयः ॥ एवमुत्त-रत्रापि पाकपरिक्रिया अन्नादिपचनारंभः ॥ यज्ञपरिसमाप्तिस्त्व-वभृथस्नानेन बोध्या ॥ स्नानं त्ववभृथो यावत्तावत्तस्य न सूतक-मित्युक्तेः ॥ ऋत्विजां च मधुपर्कोत्तराशौचाभावः ॥ आहिताग्नेः

सायंप्रातर्होमादौ स्नानेन शुद्धिः ॥ सूतके मृतके श्रौते कर्मणि तत्कालं स्नात्वा शुद्धिमवाप्नुयादिति स्मृतेः ॥ अनाहिताग्नेः सूतकादिप्राप्तौ परहस्तेन होमः कार्यः ॥ सूतके मृतके चैव अशक्तौ श्राद्धभोजने ॥ प्रवासादि निमित्तेषु हावयेन्न तु हापयेदिति बृहस्पत्युक्तेः ॥ हावयेत्परहस्तेन होमं कारयेत् ॥ न तु हापयेदित्यर्थः ॥ देवतोद्देशेन द्रव्यत्यागमात्रं तु सूतकिभिरपि कार्यं ॥ अन्यस्य द्रव्यत्यागे स्वामित्वाभावात् ॥ ऋग्वेदिनां तु द्वादशरात्रमहोमेऽपि नाग्निविच्छेदः ॥ तैः परहस्तेन होमो न कार्योऽपि वा ॥ आपस्तंबाद्यैः परहस्तेन कार्य एव ॥ सुदर्शनभाष्ये ॥ त्रिरात्रहोमे स्मार्ताग्नेर्लौकिकत्वोक्तेः ॥ अग्नेरात्मारोपणे कृते तु पुनः संधानमेव कार्यं ॥ सूतके मृतके चैव वेदाध्ययनवैश्वदेवादिहोमातिथिपूजादेवा-

दितर्पणबलिहरणानि न कार्याणि ॥ पंचयज्ञविधानं तु न कुर्या-
न्मृत्युजन्मनोरित्युक्तेः ॥ अन्नसंस्कारार्थं तु परहस्तेन वैश्वदेवः का-
र्यः ॥ सूतके मृतके कुर्यात्प्राणायामत्रयं नरः ॥ तथा मार्जनमंत्रास्तु
मनसोच्चार्य मार्जयेत् ॥ गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेद-
येत् ॥ मार्जनं तु न वा कार्यमुपस्थानं न चैव हीत्युक्तेः ॥ सर्वका-
लमुपासा तु संध्ययोः पार्थिवेष्यते ॥ अन्यत्र सूतकाशौचविभ्रमा-
तुरभीतित इति विष्णुपुराणवाक्यं ॥ अन्यत्रेत्युक्तिस्तु संपूर्णसं-
ध्यावंदनपरा ॥ विभ्रमो भूतादिनिमित्तका भ्रांतिः ॥ आतुरं ज्व-
राद्युपद्रवः ॥ भीतिः राजकारणचोरादिभयं ॥ अन्यत्र तु । अ-
र्घ्यांता मानसी संध्या अर्घ्यमात्रं समंत्रकं ॥ नो मंत्रविधिरुच्चार्यो
नोपस्थानं न वै जपः इत्यप्युक्तं ॥ क्वचित्तु अर्घ्यानंतरं मनसा दश-

वारं गायत्रीस्मरणमप्युक्तं ॥ ग्रहणे तु राहुस्पर्शानंतरं यावन्मुक्तिस्तावत्पर्यंतमेव जपहोमदानादावाशौचं नास्ति ॥ सूतके मृतके चैव न दोषो राहुदर्शने ॥ तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते ॥ इति लिंगपुराणोक्तेः ॥ स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके इति व्याघ्रोक्तेश्च ॥ यदा भोजनारंभानंतरमाशौचं श्रूयते तदा कर्तव्यमाह शातातपः ॥ यदा भोजनकाले तु अशुचिर्भवति द्विजः ॥ भूमौ निक्षिप्य तं ग्रासं स्नात्वा विप्रो विशुध्यति ॥ भक्षयित्वा तु तं ग्रासमहोरात्रेण शुध्यति ॥ अशित्वा सर्वमेवान्नं त्रिरात्रेण विशुध्यतीति । अशुचिः शूद्रस्पर्शादिनेति केचित् ॥ अविशेषात्सूतकादिनापीत्यन्ये ॥ प्रत्यहमन्नदातॄणां सूतकिनामपक्वशाकतंडुलादिपरिग्रहे नाशौचं ॥ अन्नसत्रप्रवृत्तानामामान्नं नैव

गर्हितं ॥ भुक्त्वा पक्वान्नमेतेषां त्रिरात्रं तु व्रती भवेदित्यंगिर-
सोक्तेः ॥ उभाभ्यामपरिज्ञातं सूतकं नैव दोषकृत् ॥ एकेनापि
परिज्ञाते भोक्तुर्दोषमुपावहयेत् ॥ उभाभ्यामसूतिसूतिकाभ्यां भोक्तुः
सूतिकागृहे भोक्तुराशौचमायातीत्यर्थः । विवाहोत्सवयज्ञेषु त्वंत-
रामृतसूतके ॥ परैरन्नं प्रदातव्यं भोक्ता तस्य न दोषभाक् ॥
पूर्वसंकल्पितान्नेषु न दोषः परिकीर्तितः ॥ पूर्वसंकल्पितान्नेषु
सूतकप्राप्ते इति शेषः । त्रिरात्रादिकमाशौचं येनातिक्रांतकालिकं ॥
क्रियते तत्पदार्थस्य नाशौचं विद्यते क्वचित् ॥ पुस्तकादौ तु सं-
स्पृष्टे प्रोक्षणाच्छुद्धिरिष्यते ॥ इति विष्णुस्मृतौ ॥ आदिशब्दा-
त्तु यस्य पदार्थस्य प्रक्षालने नाशः तत्कशिपूपबर्हणादिकं गृ-
ह्यते ॥ अथापमृत्युमरणेविशेषः ॥ कौर्मे ॥ व्यापादयेद्यदात्मानं

स्वयमप्युदकादिभिः । विहितं तस्य नाशौचं नापि कार्योदकक्रिया इति ॥ व्यापादयेत् घातयेत् ॥ आदिपदाद्विषोत्थं धनादि गृह्यते ॥ स्वयमित्युक्तेः ॥ बुद्धिपूर्वकमात्मघातिनां दाहमात्रं कृत्वाशौचमंत्यकर्मादिकं च न कार्यमित्युक्तं भवति ॥ शस्त्राग्निगरदाश्चैव पाषंडाः क्रूरबुद्धयः ॥ क्रोधात्पापं विषं वन्हिशस्त्रमुद्बंधनं जलं ॥ गिरिवृक्षप्रपातं च ये कुर्वंति नराधमाः ॥ महापातकिनो ये च पतितास्ते प्रकीर्तिताः ॥ पतितानां न दाहः स्यान्नांत्येष्टिर्नास्थिसंचयः ॥ न चाश्रुपातः पिंडो वा कार्यं श्राद्धादिकं क्वचित् ॥ तेषामपि तथा गंगातोये संस्थापनं हितं ॥ इदं त्वनाहिताग्नेः ॥ आहिताग्नेस्तु लौकिकाग्नौ दाहमात्रं ॥ प्रमादाद्दुर्मरणे आशौचादि सर्वं भवत्येवेत्यंगिरा आह ॥ प्रमादा-

दपि निःशंकरुत्वकस्माद्विधिचोदितः ॥ श्रृंगिदंष्ट्रिनखिव्यालविष-
विद्युज्जलादिभिः ॥ चंडालैरथवा चोरैर्निहतो वापि कुत्रचित् ॥ त-
स्याशौचं विधातव्यं कर्तव्या चोदकक्रियेति ॥ व्यालः सर्पः ॥
सर्पेण निहते नागबलिः कार्यः ॥ श्रृंग्यादिभिर्निहते तु नाराय-
णबलिः कार्यः ॥ यथाशक्ति गोसुवर्णवस्त्रादिदानं ब्राह्मणभोजनं
च कार्यं ॥ बुद्धिपूर्वमात्मघातिनां संवत्सरांते सर्वमौर्ध्वदैहिकं कु-
र्यात् ॥ बुद्धिपूर्वं मृतानां च पतितानां तथैव च ॥ ऊर्ध्वं संवत्स-
रात्कुर्यात्सर्वमेवोर्ध्वदैहिकमित्युक्तं ॥ बुद्धिपूर्वप्रयागमरणे तु तत्का-
ल एव सर्वमाशौचादिकं कार्यमेव ॥ गंगायां तु समासाद्य यस्तु
प्राणान्परित्यजेत् ॥ ईप्सितांल्लभते कामान्वदंति मुनिपुंगवा इति
विहितमरणत्वात् । यतिमरणे तु दाहाशौचाद्यभावः ॥ त्रयाणामा-

श्रमाणां च कुर्याद्दाहादिकाः क्रियाः ॥ यतेः किंचिन्न कर्तव्यं न चान्येषां करोति स इति ब्राह्मोक्तेः ॥ स यतिः । अन्येषां पित्रादीनां दाहादिका इत्यनुवर्तते ॥ इदं परमहंसविषयं ॥ एकदंडहंसादित्रिदंडिनां तूशनसा विशेष उक्तः ॥ एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा ॥ अहन्येकादशे प्राप्ते पार्वणं तु विधीयते ॥ सपिंडीकरणं तेषां न कर्तव्यं सुतादिभिः । त्रिदंडग्रहणादेव प्रेतत्वं नैव जायत इति ॥ परमहंसपुत्रेण तु सन्यस्ते पितरि जीवति मृते वा प्रतिसांवत्सरिकदर्शादिश्राद्धं पितामहस्य कार्यं ॥ वृद्धौ पितरि संन्यस्ते ताते च पतिते सति ॥ येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुत इति स्मृतेः ॥ वृद्धौ नांदीश्राद्धे ॥ वृद्ध इति पाठे तु पितरीत्यस्य विशेषणं ॥ उच्चारणं तु जनकस्य पितृ-

पितामहप्रपितामहानामिति बोद्धव्यं ॥ पितरीत्यनुवृत्तेः ॥ पुन-
स्तातग्रहणात् पतिते ताते सति जीवति सतीत्यर्थो बोध्यः ॥ मृते
तु नारायणबल्यादिकं कृत्वा पतितस्यापि श्राद्धं कार्यं ॥ एवं नांदी-
श्राद्धे पितुर्वार्धिक्येऽप्यन्वयानुपपत्त्या पितृजीवनत्वं ज्ञेयं ॥ संन्यस्ते
पितरि तु सामान्योक्त्या जीवति मृते वा तज्जनकादीनामेव श्रा-
द्धादिकं ॥ न तु संन्यस्तपितुः ॥ यतः किंचिन्न कर्तव्यमिति सामा-
न्योक्तेः ॥ अथ प्रवासस्थमरणे किंचिदुच्यते ॥ प्रवासे मृतस्या-
स्थान्यानीय घृतेनाभ्यज्य मंत्रेण दाहादिकं कुर्यात् ॥ अस्थीना-
मलाभे तु भविष्ये ॥ कुर्याद्दर्भमयं प्रेतं दर्भैस्त्रिशतषष्टिभिः ॥ पा-
लाशाभिः समिद्भिर्वा संख्या चैव प्रकीर्तिता ॥ चत्वारिंशच्छिरः
स्थाने ग्रीवायां च दशैव तु ॥ बाव्होश्चैव शतं दद्याद्विंशतिं च

तथोरसि । उदरे विंशतिं दद्यात्त्रिंशतं कटिदेशयोः ॥ ऊर्वो-श्चैव शतं दद्यात्त्रिंशतं जानुजंघयोः ॥ पादांगुलीषु दश वै ए-षा वै प्रेतकल्पनेति ॥ अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना स्व-यं ॥ वेष्टितव्यस्तथा नूत्नकृष्णसारस्य चर्मणा ॥ ऊर्णासूत्रेण ब-ध्वा तु प्रलेप्तव्यो यवस्तथा ॥ सुपिष्टैर्जलसंमिश्रैर्दग्धव्यश्च त-थाग्निना ॥ असौ स्वर्गाय लोकाय स्वाहेत्युक्त्या स्वबांधवैः ॥ एवं पर्णशतं दग्ध्वा त्रिरात्रमशुचिर्भवेदिति ब्राह्मोक्तेश्च ॥ अस्य दा-हादिकं पूर्ववत् ॥ अथ दूरं प्रवासं गतस्य वार्ताभावे कर्तव्यमा-ह ॥ वृद्धमनुः ॥ प्रोषितस्य तथा कालो गतश्चेद्द्वादशाब्दिकः ॥ प्राप्ते त्रयोदशे वर्षे प्रेतकार्याणि कारयेदिति ॥ गृह्यकारिका-यां तु ॥ तस्य पूर्ववयस्थस्य विंशत्यब्दोर्ध्वतः क्रिया ॥ ऊर्ध्वं

पंचदशाब्दात्तु मध्यमे वयसि स्मृता ॥ द्वादशाद्वत्सराद्दूर्ध्वमुत्त-
रे वयसि स्मृता ॥ चांद्रायणत्रयं कृत्वा त्रिंशत्कृच्छ्राणि वा सु-
तैः ॥ कुशैः प्रतिकृतिं दग्ध्वा कार्याऽऽशौचादिका क्रिया ॥ इत्यु-
क्तं ॥ प्रवासमृतस्य तिथ्यज्ञाने तु विशेषः ॥ देशांतरगतो नष्ट-
स्तिथिर्न ज्ञायते यदि ॥ कृष्णाष्टमी ह्यमावास्या कृष्णा वैकाद-
शी च या ॥ उदकं पिंडदानं च तत्र श्राद्धं च कारयेत् ॥ ए-
कादशी दशमीविद्धेति शेषः ॥ इदं तु मासज्ञाने ॥ दिनमेव न जा-
नाति मासं नैव तु यो नरः ॥ मार्गशीर्षेऽथवा भाद्रे माघे वा
तद्दिनं भवेत् ॥ कालादर्शे ॥ मासाज्ञाने दिनाज्ञाने कार्यमाषाढ-
माघयोः ॥ कर्तृभिन्नसपिंडानां पालाशविधिना चरेत् ॥ करण-
स्थले विद्यमानानां पालाशशरदाहदिनमारभ्य त्रिरात्रं ॥ तदा-

हांगिराः ॥ देशांतरमृतं श्रुत्वा आशौचमकृतं यदि ॥ कालात्ययेऽपि कुर्वीत दाहकाले दिनत्रयमिति ॥ स्मृत्यर्थसारे तु गृहीतशौचानां स्नानमात्रमुक्तं ॥ अथ मृतदिने प्रतिबंधकेन संस्काराकरणे तु अंतर्दशाहमध्ये दाहादिसंस्कारारंभे तत्रैव सर्वं समापयेत् ॥ दशाहोर्ध्वं तु आहिताग्नेर्दाहादि सर्वमाशौचं कुर्यात् ॥ अनाहिताग्नौ तु पूर्वमगृहीताशौचयोः पत्नीपुत्रयोः कर्मांगं त्रिरात्रं ॥ अथ पतितानां घटस्फोटविधिः ॥ ब्रह्महत्यादिपातकैर्म्लेच्छाद्यन्नाशनैर्वा पतिताः प्रायश्चित्तापेक्षारहिताः तेषां जीवतामपि घटस्फोटं कृत्वा अंत्यकर्माशौचं च कार्यं ॥ तत्प्रकारस्तु ॥ पतितबांधवैः पतितपुत्रं वा गुणहीनं तद्बंधुं वा पुरस्कृत्य शूद्रादिगृहस्थजीर्णघटं शूद्रदासीदासादिना जलेनापूर्य निंदितचतुर्थ्यादि

दिनवारादौ सायंकालमुखे सर्वैः स्नात्वा छिन्नाग्रान्दर्भान्भूमावा-
स्तीर्य जलपूरितघटं च दर्भेषु संस्थाप्य मुक्तशिखाग्रं यथा प्राची-
नावीतिनः विद्यासंबंधिनः ज्ञात्यादिबांधवाश्च घटस्फोटकर्तार-
मुपस्पृश्य दक्षिणामुखाः तेन दक्षिणाभिमुखेन पुत्रादिना वाम-
पादेन एवं पतितनामगोत्रे गृहीत्वा श्राद्धावपात्रं कुर्म इत्युक्त्वा
तत्स्फोटयेयुः ॥ ततः अहोरात्रमाशौचं कृत्वा द्वितीयदिने दशाह-
तिलोदकपिंडदानानि कारयित्वा एकादशाहश्राद्धं कारयेयुः ॥ तदु-
क्तं मनुना ॥ पतितस्योदकं कार्यं सपिंडैर्ब्राह्मणैः सह ॥ निंदिते-
ऽहनि सायान्हे ज्ञात्यृत्विग्गुरुसंनिधौ ॥ दासीघटमपां पूर्णं पर्यस्ये-
त्प्रेतवत्पदा ॥ अहोरात्रमुपासीत आशौचं बांधवः सहेति वसि-
ष्ठोऽपि दासोऽसवर्णपुत्रो बंधुसदृशो वा गुणहीनः सव्येन पादेन

प्रवृत्ताग्रान्दर्भाँल्लोहितान्वा उपस्तीर्य अपां पूर्णपात्रं अस्मै निनयेत् । निनेतारं चास्य प्रकीर्णकेशा ज्ञातयोऽन्वालभेरन्नपसव्यं कृत्वेति प्रवृत्ताग्राः च्छिन्नाग्राः ॥ घटस्फोटाभावे पतितज्ञात्यादिबांधवानां धर्माधिकाराभावादवश्यं घटस्फोटाशौचादिकं कार्यं ॥
॥ इति श्रीमन्नृसिंहार्यैः कृते स्मृत्यर्थसागरे ॥ स्यादाशौचतरंगोऽयं श्रीमध्वपतितुष्टिदः ॥ ॥ श्रीकृष्णार्पणमस्तु ॥
॥ श्री ॥ ॥ आशौचतरंगः समाप्तः ॥ ॥ छ ॥ ॥ छ ॥



श्रीवेदव्यासाय नमः ॥ ॐ ॥ अथ सदाचारस्मृत्यनुसारेणा-
न्हिकमुच्यते ॥ प्रत्यहं रात्रौ पश्चिमभागे षट्घटिकाकालात्मके
ब्राह्मे मुहूर्ते उद्बुध्य नारायणादिनामस्मरणं कृत्वा शयनादुत्थाय
सम्यग्भूमिं प्रार्थयेत् ॥ तत्र मंत्रः ॥ समुद्रवसने देवि पर्वतस्त-
नमंडिते ॥ विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्वमे ॥ विष्ठा-
मूत्रकफोत्सर्गमपराधं क्षमस्व मे इति ॥ ततः प्रातःकालादिकं
कर्म नित्यनैमित्तकं तथा ॥ ईश्वराराधनार्थाय करिष्येऽहं तवाज्ञ-
येति विष्णुं प्रार्थ्य । नमोऽस्तु तात्त्विका देवा विष्णुभक्तिपराय-
णाः ॥ धर्ममार्गे प्रेरयंतु भवंतः सर्वं एव हि इति देवान्प्रार्थये-
त् ॥ ततो ग्रामाद्बहिर्गत्वा मूत्रपुरीषोत्सर्जनं कुर्यात् तत्रायं क्रमः ॥
ग्रामाद्बहिः निर्ऋतिभागे पश्चिमभागे शुद्धभूमौ कपालास्थिभ-

स्मादिरहितायां तृणशुष्कपत्रैर्भूमिमाच्छाद्य यज्ञोपवीतं कटाव-
लंबितं पृष्ठतः कर्णे प्रस्थाप्य जलपूर्णपात्रं दूरतः स्थाप्य वस्त्रे-
ण शिरः घ्राणं च प्रच्छाद्य निर्जने मौनेन ऊर्ध्वाधोभागं तिर्य-
क्भागं चानवलोकयन् मलमूत्रे विसर्जयेत् ॥ दिवा चेदुत्तरामुखः
रात्रौ तु दक्षिणाभिमुखः ॥ संध्याकाले पश्चिमाभिमुखः ॥ शौचोद-
कपात्रं मूत्रपुरीषोत्सर्जनकाले हस्तेन धृतं चेत्तत्पात्रोदकं मूत्र-
समं ॥ गृहीतोदकपात्रं यः कुर्यान्मूत्रपुरीषके ॥ तत्तोयं मूत्रतुल्यं
स्यात्द्विजश्चांद्रायणं चरेत् ॥ इत्युक्तेः ॥ यज्ञोपवीतं तदा कंठा-
वलंबितं चेत्तदपवित्रं ॥ त्यक्त्वा पुनर्नूतनयज्ञोपवीतं धार्यं ॥
तदा पाणिं शिरसि न स्थापयेत् ॥ देवालये यज्ञस्थले स्मशाने-
ऽग्नौ उदके च तटाकसमुद्रनदीतीरेषु अश्वत्थादिद्रुमच्छायायां अ-

ग्निगोब्राह्मणसूर्यसोमोदकाभिमुखं च न कुर्यात् ॥ स्वविष्ठां न पश्येत् ॥ दृष्टा चेत्सूर्यगोब्राह्मणादिकं पश्येत् तथा व्रीह्यादितुषां गारादिमार्गे सस्यस्थाने नखलोमकीटलताच्छादितस्थले क्षेत्रेषु विण्मूत्रे नोत्सृजेत् ॥ स्नानं कृत्वार्द्रवासस्तु विण्मूत्रे कुरुते यदि ॥ प्राणायामत्रयं कृत्वा पुनः स्नानेन शुध्यति ॥ इत्यत्र मुख्य-स्नानाशक्तस्य पुनः स्नानशब्देन मंत्रस्नानं ग्राह्यं मंत्रस्नानविधिश्चोत्तरत्र वक्ष्यते ॥ संझाटनात्सप्तवारं शुष्कस्त्वार्द्रः पटो भवेदिति हारीतस्मृतेः ॥ झाटनशब्देन हस्ताभ्यां वस्त्रसंचालनमुच्यते ॥ इति मूत्रपुरीषोत्सर्जनं ॥ अथ शौचं ॥ मृल्लोष्टेन गुदं संशोध्य गृहीतशिस्नश्चोत्थाय जलपात्रस्थलं गत्वा पात्रस्थोदकेन

मृदा शौचं कुर्यात् ॥ न तु नद्यादौ ॥ नदीसरित्तटाकेषु वापीकूपन्हदेषु च ॥ कुल्यायां देवखातेषु द्विजः शौचं विवर्जयेत् ॥ इति ऋष्यशृंगोक्तेः ॥ अंगारतुषकीटास्थिशर्कराशकलान्वितां ॥ वल्मीकमूषकोत्खातां स्मशानस्थां च मार्गगां ॥ अन्यशौचावशिष्टां च ह्यादद्दीत न मृत्तिकां ॥ एका लिंगे करे तिस्र उभयो मृद्वयं स्मृतं ॥ पादयोरेकवारं तु मूत्रशौचमिदं स्मृतं ॥ विण्मूत्रोत्सर्जने चांघ्रिं दक्षिणं क्षालतेत्ततः ॥ वामपादं ततोऽन्यत्र वामपादौ ततः परं ॥ अन्यत्र बहिरागमानादिनिमित्ते ॥ परं दक्षिणपादं ॥ अंगुष्ठपर्वमात्रा स्याल्लिंगशौचे तु मृत्तिकेति ॥ गुदशौचे तु संख्यानियममाह यमः ॥ द्वे लिंगे मृत्तिके देये गुदे पंच करे

१ गुदं सांडं च धावयेदिति वा पाठः ।

दश ॥ उभयोः सप्त दातव्याः तिस्रस्तिस्रस्तु पादयोः ॥ इति मोहने ॥ मृत्प्रमाणमाह वसिष्ठः ॥ अर्धप्रसृतिमात्रैस्तु मृद्भि-रभ्युच्छ्रितैर्जलैः ॥ गंधलेपक्षयकरं शौचं कुर्याद्यथाविधि ॥ द्विती-यादिस्तदर्धार्धा ज्ञेया शौचे तु मृत्तिकेति ॥ मृदा शौचं सगु-ल्फांतमाजानु स्याज्जलेन तु ॥ मृदा त्वामणिबंधं स्याज्जलेनाकू-र्परं तथा ॥ मूत्रात्तु द्विगुणं प्रोक्ता रेतोत्सर्गे तु मृत्तिका ॥ गृहस्था-नामिदं प्रोक्तं द्विगुणं ब्रह्मचारिणां ॥ त्रिगुणं तु वनस्थानां य-तीनां तु चतुर्गुणं ॥ रात्रावर्धं चरेच्छौचमापद्यपि तथैव च ॥ तदर्धमातुरे प्रोक्तमातुरस्यार्धमध्वनि ॥ स्वग्रामे पूर्ण आचारश्चा-न्यग्रामे तदर्धकं ॥ पट्टणे पादमाचारः पथि शूद्रवदाचरेत् ॥ गंध-क्षयकरः शौचः स्त्रीशूद्राणां विधिः स्मृतः ॥ न्यूनाधिकं न कर्तव्यं

शौचशुद्धिमभीप्सता ॥ प्रायश्चितेन युज्येत विहितातिक्रमेण स इति दक्षस्मृतिः ॥ ताम्रादिपात्रे विण्मूत्रसंबंधे गंधक्षयपर्यंतं मृज्जलाभ्यां संशोध्य आम्लभस्मादिभिः संशोधयेत् ॥ मृद्भाडं तु त्याज्यमेव। विप्रस्य भुंजतश्चेत्स्यात्स्रवणं मलमूत्रयोः ॥ भूमौ निक्षिप्य तं ग्रासं स्नात्वा विप्रो विशुध्यति ॥ भक्षयित्वा तु तं ग्रासमहोरात्रेण शुध्यति ॥ इत्यांगिरसस्मृतिः ॥ अथ गंडूषाः॥ चत्वारो ष्टौ च गंडूषाः क्रमान्मूत्रपुरीषयोः ॥ भोजने द्वादशैव स्यू रेतोत्सर्गे तु षोडश ॥ बहिरागमनादौ तु चत्वारः शुद्धिदाः स्मृताः ॥ ब्रह्मचर्यादीनां तु मृत्तिकाशौचोक्तन्यायेन द्विगुणत्वादिकं ज्ञेयं ॥ स्त्रीणामप्येवमेव ॥ विधवानां तु यतिवद्गंडूषाः परिकीर्तिताः ॥ मेध्यामेध्येंद्रियाण्याह मनुः ॥ ऊर्ध्वं नाभे-

रिंद्रियाणि मेध्यान्युक्तानि सर्वशः ॥ तदधस्तात्त्वमेध्यानि कीर्ति-
तानि न संशय इति ॥ केशशुक्लमसृङ्मज्जामूत्रविट्कर्णविण्नखा-
न् ॥ श्लेष्माश्रुदूषिकास्वेदान् परस्य यदि संस्पृशेत् ॥ प्र-
क्षाल्य मृज्जलाभ्यां तदंगं स्नात्वाचमेद्द्विजः ॥ तान्येव स्वा-
नि संस्पृश्य पूतः स्यात्परिमार्जनादिति ॥ शुक्लं रेतः असृ-
क् रक्तं । मज्जा शरीरस्य धातुविशेषः ॥ विट् विष्ठा ॥ कर्णविट्
कर्णांतरस्थमलं ॥ अश्रु नेत्रोदकं ॥ दूषिका नेत्रमलं ॥ अथाच-
मनं ॥ शुचौ देशे उपविश्यैव उभयजान्वंतरहस्तयुग्मः सपवित्रः
बद्धशिखः ब्रह्मसूत्रवान्प्राङ्मुख उदन्मुखो वा बुद्बुदफेनरहि-
तेन शोधितेन शुद्धेन शीतलजलेन द्विजः ब्राह्मेण तीर्थेन आच-
मेत् ॥ मार्कंडेयः ॥ सपवित्रेण हस्तेन कुर्यादाचमनक्रियां ॥ नो-

च्छिष्टं तत्पवित्रं तु भुक्तोच्छिष्टं विवर्जयेत् ॥ पवित्रग्रंथिर्नाचामेन्न दूर्वाभिः कदाचन ॥ नाकाशेन च शून्यः सन्कुशपाणिरुपस्पृशेत् ॥ अंगुष्ठमूलं ब्राह्मं स्यात्प्राजापत्यं कनिष्ठगं ॥ पैतृकं तर्जनीमूलं कराग्रं दैवतं स्मृतं ॥ आग्नेयं करमध्यं स्यात्तीर्थान्येवं द्विजस्य हि ॥ तर्पणं देवतादिभ्यो देवतीर्थादिभिः स्मृतमिति ॥ शून्यः पवित्ररहितः ॥ आदिपदाभ्यां ऋषितर्पणं कनिष्ठमूलस्थप्राजापत्येन तीर्थेन ॥ पितृतर्पणं तु तर्जन्यंगुष्ठमध्यस्थपितृतीर्थेनेति ग्राह्यं ॥ भरद्वाजः ॥ पिबेदाचमने वारि वीक्षितं ब्रह्मतीर्थतः ॥ प्राजापत्येन होतव्यं पैत्रेण पितृतर्पणं ॥ कराग्रेण प्रधानं स्यान्मध्यमेन प्रतिग्रह इति ॥ व्याघ्रः ॥ गात्रस्थानान्याचमने स्पृष्ट्वास्पृष्ट्वा जलं स्पृशेत् ॥ इति ॥ प्रत्येकमुदक-

स्पर्शं कुर्यादाचमने बुध इति दक्षोक्तेः ॥ एकदैवोदकं गृहीत्वा सर्वांगानां उदकस्पर्शनं वा ॥ व्यासः ॥ गोकर्णाकृतिहस्तेन माषमग्नं जलं पिबेत् ॥ तन्न्यूनमधिकं पीत्वा सुरापानी भवेद्द्विजः ॥ गोकर्णकरणप्रकारमाह ॥ व्यास एव ॥ संहितांगुलिना तोयं गृहीत्वा पाणिना द्विजः ॥ मुक्तांगुष्ठकनिष्ठेन गोकर्णं तं विदुर्बुधा इति ॥ संवर्तः ॥ शिरः प्रावृत्य कंठं वा तिष्ठन्मुक्तशिखोऽपि वा ॥ अकृत्वा पादयोः शौचमाचम्याप्यशुचिर्भवेदिति ॥ तिष्ठन्नित्यस्यापवादः ॥ स्मृत्यंतरे ॥ जानुमात्रे जले तिष्ठन्नासीनः प्राङ्मुखः स्थले ॥ तर्पणाचमने कुर्याज्जपं चापि यथाविधि ॥ तत्र विशेषमाह पैठीनसिः ॥ पादमेकं जलस्यांतर्द्वितीयं बहिरेव च ॥ कृत्वाचमेद्द्विजश्चार्द्रवासा वा शुष्कवस्त्रकः ॥ आर्द्रवासा जले कुर्यात्तर्प-

णाचमने जपं ॥ शुष्कवासाः स्थले कुर्यात्तर्पणाचमने जपमिति ॥
जानुमात्रे तदूर्ध्वं वा जले तिष्ठन्नुपस्पृशेत् ॥ आचमेदित्यर्थः ॥
अग्नितप्तं च दुर्गंधं तथा बुद्बुदकेनयुक् ॥ एलादिवासितं क्षारं
जलं शौचावशेषितं ॥ च्छन्नं पर्युषितं स्पृष्टं त्यजेच्च कृमिसंयुतं ॥
देवाभिषिक्तशेषं च त्यजेदाचमने जलं ॥ तिष्ठन्मेहंश्च संजल्पन्शृ-
ण्वन्दुर्जनभाषणं ॥ अन्यं स्पृशन् दिशं पश्यन्पश्यन्दुष्टपदार्थकं ॥
शयानः पादुकस्थश्च बहिर्जानुकरोऽपि च ॥ कंचुक्याच्छादित-
शिराः सोपानत्को नचाचमेत् ॥ एकहस्तेन नाचामेन्मुक्तकेशो
जलाप्लुतः ॥ सदा यज्ञोपवीती स्यात्तथा बद्धशिखः सदा ॥ तद्धी-
नो यद्द्विजः कुर्यात्तसर्वं निष्फलं भवेदिति ॥ स्वोपविष्टस्थले कृमि-
पिपीलिकादिपीडाव्यावृत्त्यर्थं स्वपरितः स्थापितजलेनावृतः ॥ त-

था हारीतः ॥ पवित्रपाणिराचामेत्प्रकृतिस्थेन वारिणा ॥ त्रिः प्राश्यांगुष्ठमूलेन द्विरुन्मृज्य कपोलकौ ॥ मध्यमांगुलिभिः पश्चाद्विरोष्ठं समृजेत्सदा ॥ नासिकोष्ठांतरं पश्चात्सर्वांगुलिभिरेव च ॥ पादौ हस्तौ शिरश्चैव जलैः संमार्जयेत्ततः ॥ अंगुष्ठतर्जनीभ्यां तु संस्पृशेन्नासिकापुटौ ॥ अंगुष्ठानामिकाभ्यां तु चक्षुः श्रोत्रे जलैः स्पृशेत् ॥ कनिष्ठांगुष्ठकैर्नाभिं जलेन हृदयं ततः ॥ सर्वांगुलीभिः शिरसि बाहुमूले तथैव च ॥ नामभिः केशवाद्यैश्च यथासंख्यमुपस्पृशेदिति ॥ पवित्रपाणिः कुशपवित्रपाणिः । सुवर्णपवित्रपाणिर्वा ॥ तल्लक्षणं ॥ अनंतस्तरणौ यौ तौ कुशौ प्रादेशसंयुतौ ॥ अनखच्छेदितौ साग्रौ तौ पवित्राभिधायकाविति ॥ कुशमध्यस्थगर्भपवित्रं निष्कास्य एतादृशं कुशपवित्रं द्वयमेव

पवित्रमित्यर्थः ॥ सुवर्णस्य सुवर्णस्य सुवर्णस्यांगुलीयकं ॥ पवित्रमिति विज्ञेयं सर्वकर्मसु पूजितमिति ॥ सुवर्णस्य शोभनवर्णस्य पंचगुंजात्मकैर्माषैःषोडशभिः परिमितस्य सुवर्णस्य कांचनस्य अंगुलीयकं मुद्रिकापवित्रमित्यर्थः ॥ अन्यानि तु पवित्राणि कुशदूर्वात्मकान्यपि ॥ हेमात्मकपवित्रस्य कलां नार्हंति षोडशीं ॥ एकोऽनामिकया धार्यो दर्भस्तु द्विजसत्तमैः ॥ द्वाभ्यामनामिकाभ्यां वा धार्ये दर्भपवित्रके ॥ एवं हेमपवित्रं च धार्यं विप्रादिभिर्बुधैरिति ॥ प्रकृतिस्थेन वारिणा समीचीनोदकेन ॥ तत्प्रकारः त्रिरिति । त्रिः त्रिवारं अंगुष्ठमूलेन ब्राह्मेण तीर्थेन उदकमिति शेषः। त्रिभिः केशवादिनामभिः प्राश्य पीत्वा गोविंदविष्णुनामभ्यां करौ प्रक्षाल्येति शेषः॥ कपोलकौ गंडस्थलद्वयं अंगुष्ठमूलभागेन

मधुसूदनत्रिविक्रमेति नामद्वयेन द्विः द्विवारं उन्मृज्य प्रक्षाल्य ॥ ओष्ठं ओष्ठद्वयं वामननाम्ना मध्यांगुलिभिः मध्यमांगुलित्रयेण ॥ तथा नासिकोष्ठमध्यभागं सर्वांगुलिभिः श्रीधरेति नाम्ना संमृजेदित्यन्वयः ॥ ततः हृषीकेशनाम्ना हस्तौ पद्मनाभेति नाम्ना पादौ । दामोदरेति नाम्ना शिरः संमार्जयेत् ॥ सर्वांगुलिभिरित्यस्याप्यत्रान्वयः ॥ चैवेति च शब्दात् संकर्षणेति नाम्ना नासिकाधोभागं मुष्टिपृष्ठभागेन संमृजेदिति ज्ञेयं ॥ नासिकापुटौ नासिकादक्षिणवामभागौ अंगुष्ठतर्जनीभ्यां स्थूलांगुलिसमीपस्थांगुलिभ्यां वासुदेवप्रद्युम्नेति नामभ्यां जलैः तथा चक्षुर्द्वये अंगुष्ठानामिकाभ्यां अनिरुद्धपुरुषोत्तमनामभ्यां तथा कर्णद्वयमेताभ्यामेवांगुलिभ्यामधोक्षजनारसिंहेति नामभ्यां स्पृशेत् ॥ अनामि-

का तु कनिष्ठांगुलिसमीपस्थांगुलिः ॥ नाभौ अच्युतेति नाम्ना ॥ कनिष्ठांगुष्ठकैरिति बहुवचनेन अनामिका गृह्यते ॥ हृदयं तलेन करतलेन जनार्दनेति नाम्ना ॥ ततः सर्वांगुलिभिः शिरसि उपेंद्रेति नाम्ना तथा बाहुमूले बाहोरूर्ध्वभागद्वयं हरिकृष्णेति नामभ्यां सर्वांगुलिभिः संस्पृशेदिति स्मृतिवाक्याभिप्रायः ॥ जपे स्मशानगमने परिधाने च वाससः ॥ स्नाने पाने क्षुते स्वापे होमभोजनकर्मसु ॥ रथ्योपसर्पणे मूत्रविष्ठास्पृष्टौ द्विराचमेत् इति भरद्वाजस्मृतिः ॥ दाने प्रतिग्रहे होमे जपे संध्यात्रये तथा ॥ बलिकर्मणि चाचामेदादौ द्वौ सकृदंतत इति पाद्मे ॥ चांडालादीन्जपे होमे दृष्ट्वा चामेत्सकृत्सकृत् ॥ क्षुते निष्ठीवने चैव दंतोच्छिष्टे तथाऽनृते ॥ पतितैः सह संवादे दक्षिणं श्रवणं स्पृशेदिति ॥ निष्ठीवनं अधो-

वायुनिसर्गः ॥ पराशरः ॥ पुष्कराद्यानि तीर्थानि गंगाद्याः स-
रितस्तथा ॥ विप्रस्य दक्षिणे कर्णे संतीति मनुरब्रवीत् ॥ पंचाङ्गु-
लीन्मेलयित्वा दक्षिणं श्रवणं स्पृशेत् ॥ गौणाचमनं ॥ तदभावे
सलिलस्येति ॥ देवलः ॥ भोजने दंतलग्नानि निर्हृत्याचमनं
चरेत् ॥ दंतलग्नमनिर्हार्यं तृणेन यदि दंतवत् ॥ इति तृणेन यदि
अनिर्हार्यं निष्कासयितुमशक्यं तर्हि दंतलग्नमन्नादिकं दंतवत् ।
नोच्छिष्टं एव ॥ हस्तमुखलग्नघृतादिकं मृदादिसंशोधनेन न गतं
नोच्छिष्टमिति भावः ॥ शातातपः ॥ दंतलग्ने फले मूले भुक्तस्ने-
हानुलेपने ॥ तांबूलभक्षणे चैव नोच्छिष्टो भवति द्विजः ॥ इक्षुदंडे
तिले सोमे नोच्छिष्टं मनुरब्रवीत् ॥ इति यमः ॥ प्रत्यङ्मुखश्चेदा-
चामेत्पुनराचम्य शुध्यति याम्यामुखश्चेदाचामेत्पुनः स्नानेन शु-

ध्यति ॥ अरण्येऽनुदके देशे चोरव्याघ्रभयाकुले ॥ कृत्वा मूत्रं पुरीषं वा द्रव्यहस्तो न दुष्यति ॥ याः क्रियाः कुरुते मोहादनाचम्य च नास्तिकः ॥ भवंति व्यर्थास्तास्तस्य क्रियाः सर्वा न संशयः ॥ श्रौतस्मार्तेषु गार्हेषु क्रियमाणेषु वै बुधः ॥ द्विराचमेच्च सर्वत्र विण्मूत्रोत्सर्जनत्रयमिति हारीतस्मृतिः ॥ द्विराचमेदाद्यंतयोर्मिलित्वेति शेषः ॥ त्रयमिति यथोक्तं ॥ गंडूषानंतरमिति शेषः ॥ आपत्काले तु संप्राप्ते शौचाचारं न चिंतयेत् ॥ शौचं समाचरेत्पश्चादिति वेदविदो विदुरिति ॥ इत्याचमनप्रकरणं ॥ अथ दंतधावनमाचरेत् ॥ व्यासः ॥ प्रक्षाल्य पादौ हस्तौ च मुखं चाद्भिः समाहितः ॥ दक्षिणं बाहुमुद्धृत्य सव्यं जान्वंतरं ततः ॥ आचम्य प्राङ्मुखः पश्चाद्दंतधावनमाचरेत् ॥ प्रतिपत्पर्वषष्ठीषु नवम्यां

द्वादशीदिने ॥ अष्टम्यां च चतुर्दश्यां संक्रांत्यां च स्वजन्मसु ॥ उपवासदिने प्राप्ते वैधृतौ चापराह्णके ॥ नद्यां देवालये गोष्ठे जलमध्ये शुचिस्थले ॥ दक्षिणाभिमुखस्तिष्ठन् शयानश्च वि-दिङ्मुखः ॥ गच्छन् प्रत्यङ्मुखः काष्ठैर्न कुर्याद्दंतधावनं ॥ व्याघ्रकृ-ष्णाजिने विप्रः कुशमध्ये तृणेषु च ॥ उपविश्य न कुर्वीत दंत-शुद्धिमनातुरः ॥ गुर्वर्कशुक्रवारेषु कुजाहे व्रतवासरे ॥ जन्मभे श्राद्धदिवसे दंतकाष्ठं विवर्जयेत् ॥ जान्वंतर्गतहस्तः सन् कु-क्कुटासनसंस्थितः ॥ तर्पणाचमनोल्लेख्यं दंतधावनमाचरेत् ॥ वर्ज-येद्यत्त्वविज्ञातमार्द्रं शुष्कं च पाटितं ॥ क्वाथितं ग्रंथिसंयुक्तं तथाश्वत्थपलाशकैः ॥ कार्पासकुशकाशाश्च निर्गुंडीअर्कतालका-न् ॥ अंगारवालुकावस्त्रभस्मलोष्टेष्टकाश्मकान् ॥ वर्जयेद्दंतशुद्धौ

तु नखैरंगुलिभिस्तथा ॥ मुक्त्वाचानामिकांगुष्ठैर्वर्जयेद्दंतधावनं ॥ यस्तु गंडूषसमये तर्जन्या दंतधावनं ॥ करोति यदि मूढात्मा नरकं पतति द्विज इति व्याससस्मृतिः ॥ आम्रापामार्गबिल्वानां तिंत्रणीकरवीरयोः ॥ वटार्कधात्रीजंबीरक्षीरकंटकिनामपि ॥ निंबस्य कुटजस्यापि काष्ठेन दंतशोधनं ॥ पालाशमध्यकांडेन यावन्नालशिरं विना ॥ तृणपर्णैः सदा कुर्यादमामेकादशीं विना ॥ तिथिस्तात्का-लिकी ग्राह्या स्नाने वै दंतधावने ॥ इत्यांगिरसस्मृतिः । गर्गस्तु दंत काष्ठानां फलमाह ॥ श्लक्ष्णाञ्चैवार्थसंपत्तिर्बदर्या मधुरस्वरः ॥ व-टाद्दीप्तिर्धनं बिल्वादाम्लादारोग्यमेव च ॥ औदुंबराद्वाक्यसिद्धि-रपामार्गाद्धृतिः सुधीः ॥ प्रजाशक्तिः पुष्टता च सौभाग्यमुपजाय-ते ॥ अर्कात्तु रोगहीनः स्यादेतैर्दुःस्वप्ननाशनमिति ॥ दंतकाष्ठ-

प्रमाणं तु विप्राणां द्वादशांगुलं ॥ क्षत्रविट्शूद्रजातीनां नवषट्चतुरंगुलं ॥ चतुरंगुलमात्रं तु स्त्रीणां नास्त्यत्र संशयः ॥ दंतकाष्ठाभिमंत्रणमंत्रमाह ॥ आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ॥ ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥ विनाभिमंत्रणं विप्रो न कुर्याद्दंतधावनं ॥ ऋषिः प्रजापतिस्त्वस्य छंदोऽनुष्टुप्बृहस्पतिः ॥ देवतात्रितयं स्मृत्वा दंतधावनमाचरेत् ॥ प्रक्षाल्य दंतकाष्ठं तु शुचौ देशे ततस्त्यजेत् ॥ विधवाबटुकन्यानां न काष्ठैर्दंतधावनमिति ॥ भरद्वाजः ॥ तृणपर्णैस्सदा कुर्यादमामेकादशीं विनेति चूतपर्णेन कुर्यादित्यर्थः ॥ इति दंतधावनप्रकरणं ॥ ततस्त्रिराचम्य उषःकाले गजेंद्रमोक्षणादिस्तोत्राणि पठेत् ॥ ततः किंचित्परमेश्वरध्यानं कुर्यात् ॥ ब्राह्मे मुहूर्ते चोत्थाय वायु-

परुष्टश्य माधवः ॥ दध्यौ प्रसन्नकरण आत्मानं तमसः परमिति भागवते कृष्णस्य प्रातःकालाचरणोक्तेः ॥ एवमेव श्रीमदाचार्यवर्यैरपि ॥ स्मृत्वा विष्णुं समुत्थाय कृतशौचो यथाविधि ॥ धौतदंतः समाचम्येत्युक्तं । स्मृत्वेत्युक्तिबलात्पूर्वं बुध्वेति ग्राह्यं ॥ अतएव ॥ उत्तरत्र समुत्थायेति संशब्दबलाच्छयनादुत्थायेति ग्राह्यं ॥ यथाविधीत्यस्य पूर्वत्र उत्तरत्र च संबंधः ॥ तथाच उद्बुध्य नारायणेत्यादिनामस्मरणं कृत्वा शयनादुत्थाय यथावच्छौचं कृत्वा आचम्य यथाविधि दंतधावनं कृत्वा पश्चात्सम्यक्त्रिराचम्य स्मृत्वेत्यस्यात्रानुवृत्तेः तस्य स्तोत्रपाठध्यानाद्यर्थकत्वात् ॥ स्नानात्पूर्वं तत्कुर्यादित्यर्थः ॥ अथ स्नानं ॥ स्मृत्वोंकारं च गायत्रीं बध्नीयात्तु शिखां द्विजः ॥ पुनराचम्य हृदयं

बाहू स्कंधौ च संस्पृशेत् ॥ स्नानार्थं पात्रमादाय तुलसीमूलमृति-
कां ॥ शुद्धां वा मृदमादाय प्रगच्छेज्जलसंनिधिं ॥ आचम्य कृत-
संकल्पः प्रार्थयेन्मंत्रकैर्नदीं ॥ तथा ॥ गंडूषं पादविक्षेपं क्षालितं
मलिनस्य च ॥ उत्क्षेपक्षपणे देवि मत्कृतं क्षम पाहि मां ॥ इत्युक्त्वा
विष्णवादिभ्योऽर्घ्यं दत्वा मलापकर्षस्नानं कुर्यात् ॥ भुवि जानुनि
चास्थाप्य त्रिभागं कारयेन्मृदं ॥ मूलमंत्रेण संप्रोक्ष्य गायत्र्या
चाभिमंत्रयेत् ॥ अंशमेकं त्रिधा कृत्वा एकांशेन कपोलकौ ॥ गंडौ
कक्षौ द्वितीयेन सर्वांगं तु तृतीयतः ॥ संमार्जयेत् द्वितीयं च त्रिधा
कृत्वा तथैकतः ॥ सर्वांगं मार्जयेदंशान् द्वितीयेन कपोलकौ ॥ तृ-
तीयेन शिरः पादौ वक्षः संमार्जयेत्ततः ॥ तृतीयांशं गृहीत्वा तु
सलिले स्नानमाचरेत् ॥ जले तेजोमयीमूर्तिस्तस्यां प्राणं द्रवा-

त्मकं ॥ द्रवरूपं तत्र विष्णुं ध्यायेद्गंगादितीर्थके ॥ पादेन पाणिना नैव ह्यभिहन्याज्जलं द्विज इति ॥ द्वादशाक्षरमंत्रं च तथैवाष्टाक्षरं मुनिः ॥ विष्णुमंत्रं समुच्चार्य त्रिवारं तु निमज्जयेत् ॥ आपोहिष्ठेति सूक्तेन प्रोक्षयित्वा ततो मृदं ॥ ककुदि स्थायिपलैव त्रिधा कृत्वा तथैकतः ॥ पुंड्राणि तु द्वितीयेन कक्षयोस्तु तृतीयतः ॥ सर्वांगं लेपयित्वा तु त्रिर्निमज्याघमर्षणं ॥ सूक्तं त्रिवारं तु जपेन्निमज्यैव हरिं स्मरन् ॥ स्रष्टारं सर्वलोकानां जले वै शेषशायिनं ॥ प्रणवेन समुत्थाय देवर्षिपितृपूर्वकान् ॥ यमं गुरूंश्च संस्मृत्य स्नात्वा पुरुषसूक्ततः ॥ सिंचयेच्छंखमुद्रेण स्वदेहस्थं हरिं स्मरन् ॥ वासुदेवादिकं बिंबं प्रवाहाभिमुखो जले ॥ नद्यां स्नायात्तटाकादौ सूर्यस्याभिमुखो दिवा ॥ प्राङ्मुखोदङ्मुखो रात्रौ

ततस्तीरं गतो द्विजः ॥ शिरस्याधाय निर्माल्यं शालग्रामजलेन तु ॥
प्रोक्षयित्वा तु त्रिः पीत्वा तीर्थं शिरसि धारयेत् ॥ तीर्थमाहात्म्य-
प्रतिपादिका इयं श्रुतिः ॥ तदस्य प्रियमभिपाथो अश्यां नरो
यत्र देवयवो मदंति ॥ उरुक्रमस्य सहि बंधुरित्था विष्णोः पदे
परमे मध्व उत्सः ॥ अस्यार्थः ॥ अस्य उरुक्रमस्य उरुः उत्कृष्टः
क्रमः पादविक्षेपः त्रिविक्रमरूपो यस्य तादृशस्य विष्णोः पदे
स्थाने परमे उत्तमे शालग्रामचक्रांकितादिरूपे अभिषिक्तं । उ-
पसर्गाणां क्रियायाः असंनिधाने कर्तृकर्मादिसाधनसहितक्रि-
यावाचकत्वात् ॥ उत्सः भागीरथीगोदावर्यादिप्रस्रवणरूपं ॥
उत्सः प्रस्रवणं वारीत्यमरः ॥ अस्य विष्णोः प्रियं तत्पाथः ।
तत्तु देवादिपदप्रापकत्वेन प्रसिद्धं । पाथः उदकं ॥ कबंधमुदकं

पाथः इत्यमरः ॥ अहमश्यां पिबेयं । अशभोजन इति धातोः आशीर्लिङ् । उत्तमपुरुषैकवचने यासुडागमे मिपो अमादेशे अश्यामिति रूपं ॥ अत्र कर्ता मंत्रद्रष्टा यत्र तीर्थभवपाथसः पाने देवयवः देवत्वमिच्छवः देवशब्दात्क्यजंतात्क्याच्छंदसीत्युप्रत्ययः॥ नरः पुरुषाः मर्दंति हर्षं प्राप्नुवंति॥ मदीहर्षे इति धातोः । सः तीर्थपानकर्ता अस्य विष्णोः बंधुः प्रेमास्पदः हि श्रुत्यादिप्रसिद्धः मध्वः मुख्यप्राणावतारः श्रीमध्वाचार्यः इत्था इत्थमेव अभिषेकादिकं कृत्वा तीर्थपानं कर्ता विष्णोः बंधुः जात इत्यर्थः । केचिदभ्यश्यामित्यन्वयं कुर्वंति तदयुक्तं ॥ तत्पक्षे अभिशब्दस्य वैयर्थ्यापत्तेः ॥ व्यवहितान्वयप्रसंगाच्चेति ॥ ततो ब्रह्मादिकान्देवान् कृष्णद्वैपायनादिकान् ॥ ऋषीन् पितृन्सोममुखान्तर्पयित्वा ज-

लेन तु ॥ दक्षिणांशे शिखां धृत्वा तज्जलं भुवि निक्षिपेत् ॥
वस्त्रं द्वितीयं निष्पीड्य सप्तवाताहतं कृतं ॥ स्थापयित्वा तु शि-
रसि द्वादशाक्षरमंत्रतः ॥ प्रोक्षयेदुपविश्यैव सर्वांगं शोधयेत्ततः ।
उत्तरीयं सदा धार्यं तद्विना नाचरेत्क्रियां इति ॥ यज्ञोपवीते द्वे
धार्ये श्रोते स्मार्ते च कर्मणि ॥ तृतीयमुत्तरीयार्थं वस्त्राभावे च-
तुर्थकं ॥ तथा ॥ ज्येष्ठभ्रातृमता नैव धार्यं पितृमता तथा ॥ नो
भाभ्यां पादुके धार्ये तर्जन्यां रौप्यमुद्रिका ॥ स्नानवस्त्राग्रशेषेण
नोत्तरीयेण पाणिना ॥ मार्जयेदंगजातं च स्नानशाट्या न पाणिना ॥
न च निर्धूनयेत्केशान्न तिष्ठन्परिमार्जयेत् ॥ मार्जयेद्भिन्नवस्त्रेण
नान्यथा मार्जयेत्क्वचित् ॥ चंद्रिकायां ॥ नोत्तरीयमधः कुर्यान्नो-
पर्यधःस्थमंबरं ॥ अधोवस्त्रं चोत्तरीयं विपरीतं न कारयेत् ॥ अ-

स्नात्वा तु द्विजश्रेष्ठो नैव वस्त्रं प्रसारयेत् ॥ उत्तरीयं वस्त्रं धृतं चेत् अधो न कार्यं । शिरसः उपरि भागेन निष्कास्य पीडनं न तु पादभागेनेत्यर्थः ॥ अधोवस्त्रं परिधानीयवस्त्रं अधोभागेन निष्कास्य पीडनं न ऊर्ध्वभागेनेत्यर्थः ॥ स्नात्वैव वाससी धौते ह्यवच्छिन्ने भवे सति ॥ देवस्य त्वेति संप्रोक्ष्य व्याहृत्यादाय वस्त्रकं ॥ उदुत्यंजातवेदसमित्यादित्यं प्रदर्शयेत् ॥ आवहंतीति प्रावृत्य परिधानं ततः परं ॥ पूर्वकच्छमधृत्वैव पृष्ठकच्छं न धारयेत् ॥ इदं जीवत्पितृकविषयं ॥ अजीवत्पितृकेण तु तर्पणांते वस्त्रनिष्पीडनं कार्यमिति वक्ष्यते ॥ चतुर्गुणस्नानवस्त्रं कृत्वा निष्पीडयेद्बहिः ॥ वामप्रकोष्ठे निक्षिप्य द्विराचम्य विशुध्यतीति ॥

१ यच्छिन्ने विभवे सतीति वा पाठः ॥

अनिष्पीड्य स्नानवस्त्रं संध्याकर्म न चाचरेत् ॥ वस्त्रनिष्पीड-नात्तोयं पितृतृप्तिकरं स्थले ॥ जलस्नाने त्वशक्तस्य मंत्रस्नानं विधीयते ॥ आपोहिष्ठेत्यादिऋग्भिस्तिसृभिस्तु ह्यनुक्रमात् ॥ पच्छः पादशिरोहस्तु शिरोहत्पत्सु चाधतः ॥ हत्पादमस्तकेष्वेवं प्रत्यृचा मार्जयेदथ ॥ मस्तके मार्जनं यत्स्यात्पादैः प्रणवसंयुतैः ॥ तारेणं पानं गायत्र्याः मंत्रितस्यांभसस्तु यत् ॥ मंत्रस्नानं हि त-त्प्रोक्तं विद्वद्भिरिति निश्चितमिति ॥ उत्तरायणमध्ये तु यदा वर्षति वासवः ॥ आतपेन सह स्नानं दिव्यस्नानं तदुच्यते ॥ तत्र स्नातस्तु गंगायां स्नातो भवति मानवः ॥ स्नातुमायांति पितरो देवता ऋषयस्त्विहेति दिव्यस्नानं ॥ अथ ध्यानस्नानं ॥

१ अंगानामपि गायत्र्येति च पाठः ॥

ध्यानस्नानं प्रवक्ष्यामि द्वाभ्यामपि परं च यत् ॥ स्वे स्थितं पुंडरीकाक्षं मंत्रमूर्तिं हरिं स्मरन् ॥ अनंतादित्यसंकाशमुकुटं वनमालिनं ॥ तत्पादोदकजां धारां निपतंतीं स्वमूर्धनि ॥ चिंतयेद्ब्रह्मरंध्रेण प्रविशंतीं स्वकां तनुं ॥ तया संक्षालयेत्सर्वमंतर्देहगतं मलं ॥ तत्क्षणाद्विरजो मंत्री जायते भास्करोपमः ॥ योगयाज्ञवल्क्ये तु प्रकारांतरं ॥ हृत्स्थितं सर्वभूतानां रविमंडलसंस्थितं ॥ नीलजीमूतसंकाशं वासुदेवं चतुर्भुजं ॥ स्वदेहे चिंतयेन्नित्यं सर्वस्नानोत्तमं हि तत् ॥ अशक्तत्वे तु स्मृतिः ॥ आपः स्वभावतो मेध्याः किं पुनर्वह्निसंयुताः ॥ ताभिः स्नायादातुरस्तु मेध्या वै तूष्णवारिण इति ॥ तद्विधिस्तु ॥ पात्रे शीतोदकं स्थाप्य पूर्वमुष्णोदकं ततः ॥ स्थापयित्वा पुनः शीतमुदकं मूलमृत्तिकां ॥ कुशं च स्था-

पयेत्तत्र पूर्ववद्देवतां स्मरेत् ॥ ततः स्नात्वा ध्यानमंत्रं स्नानं वि-
धिवदाचरेत् ॥ अशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु कर्मिणां ॥
आर्द्रेण वाससा वाऽपि देहसंमार्जनं विदुरिति ॥ शूर्पवातनखा-
ग्रांबु स्नानवस्त्रजलं तथा ॥ दीपखट्वानरच्छाया मार्जनीरेणुरेव
च ॥ दिवा विभीतकच्छाया रात्रावश्वत्थसंभवा ॥ केशांबु गर्द-
भरजो हंति पुण्यं पुरातनम् ॥ अजरजः खररजस्तथा संमार्जनी-
रजः ॥ स्त्रीणां पादरजश्चापि हंतिपुण्यं पुरातनं ॥ अजउष्ट्रखराणां च
दंपत्योर्गुरुशिष्ययोः ॥ शिवनंदिकयोर्मध्यो हंति पुण्यं पुरातनं इति ॥
पारक्ये कूपवाप्यादौ मृत्पिंडान् त्रीन्समुद्धरेत् ॥ पश्चात्स्नायाद-
न्यथा तु न स्नानफलमाप्नुयात् ॥ नित्यं नैमित्तकं स्नानं क्रि-
यांतः स्नानमेव च ॥ तीर्थाद्यभावे कर्तव्यमुष्णोदकपरोदकैः ॥

सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः ॥ आसु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ॥ देवलः ॥ तपनस्य सुता गंगा गोमती नर्मदा तथा ॥ गोदावरी कृष्णवेणी कावेरी च मलापहा ॥ रजसा न प्रदुष्यंति ये चान्ये पुन्नदाः स्मृताः ॥ पुंनदाः शोणभद्रादयः ॥ उपाकर्मणि चोत्सर्गे प्रातःस्नाने तथैव च ॥ चंद्रसूर्यग्रहे चैव रजोदोषो न विद्यते ॥ अभावे कूपवाप्यादेर्नित्यपूर्णजलस्य तु ॥ रजोदोषेऽपि नद्यादौ स्नानं कुर्याद्विधानतः ॥ विना दर्भेण यत्स्नानं यच्च दानं विनोदकं ॥ असंख्यातं तु यज्जप्तं तत्सर्वं निष्फलं भवेदिति ॥ सम्यग्धौतं नवं श्वेतं सदशं चाष्टहस्तकं ॥ अहतं तद्विजानीयात्सर्वकर्मसु पावनं ॥ नग्नश्च हत-

१ भौमतीत्येकस्मिन्पुस्तके ॥

वस्त्रश्च अकच्छः पुच्छकच्छकः ॥ श्रौतं स्मार्तं द्विजः कर्म कुर्याच्चे-
न्निष्फलं भवेत् ॥ मलवस्त्रो दग्धवस्त्रश्छिन्नवस्त्रोऽर्धवस्त्रकः ॥ एक-
वासा अवासाश्च नग्न एव भवेन्नरः ॥ यज्ञोपवीतं वस्त्रार्थे धारयेद्वा-
द्विजोत्तम इति ॥ अथोर्ध्वपुंड्रधारणं पाद्मे ॥ ॥ श्रीरंगे द्वारकायां
च श्रीकूर्मे च तथा स्थितां ॥ सिंहाद्रौ च प्रयागे च वाराहे तुलसी-
वने ॥ गृहीत्वा मृत्तिकां भक्त्या शालग्रामजलैः सह ॥ स्नात्वा
पुंड्रं मृदा कुर्याद्धृत्वा चैव तु भस्मना ॥ देवानभ्यर्च्य गंधेन स्नान-
काले जलेन तु ॥ गायत्रीमूलमंत्राभ्यां त्रिवारमभिमंत्र्य च ॥ अ-
थोर्ध्वपुंड्रं धृत्वांगे विष्णुसायुज्यमाप्नुयात् ॥ यज्ञो दानं जपो
होमः श्राद्धं स्वाध्यायतर्पणं ॥ भस्मीभवति तत्सर्वमूर्ध्वपुंड्रं वि-
ना कृतमिति ॥ तत्प्रकारश्च तत्रैव ॥ नासादिकेशपर्यंतं दंडाकारः

सुशोभनः ॥ अच्छिद्रान्वितपुंड्रस्तु सच्छिद्रं हरिमदिरं ॥ मध्ये छिद्रान्वितः पुंड्रो हरिमंदिरसंज्ञितः ॥ विप्रैस्तु सततं धार्यः स्त्रीभिश्च शुभदर्शिभिः ॥ सुवासिन्योऽपि बिभृयुस्तिलकोपरि कुंकुमं ॥ अन्यथा पातकं प्रोक्तं तत्पाकं निष्फलं भवेत् ॥ अंगुष्ठतर्जनीभ्यां तु पुष्टिमोक्षाय पुंड्रकं ॥ मध्यमानामिकाभ्यां च आयुष्यार्थं भवेद्ध्रुवं ॥ पुंड्राणां प्रमाणं तु ब्रह्मांडे ॥ चतुरंगुलिदीर्घः स्याल्ललाटे तूर्ध्वपुंड्रकः ॥ दशांगुलस्तूदरे स्याद्वक्षःसप्तांगुलः स्मृतः ॥ चतुरंगुलः कंठदेशे पार्श्वयोस्तु दशांगुलः ॥ अष्टांगुलस्तु बाह्वोः स्यादंसयोश्चतुरंगुलः ॥ उर्ध्वाधोभागयोः पृष्ठे मूर्ध्नि च द्व्यंगुलः स्मृतः ॥ दक्षस्तनोर्ध्वभागे स्यात्श्रीवत्सं तु षडंगुलं ॥ क्रमस्तु ॥ ललाटोदरवक्षस्सु कंठे पार्श्वे तु दक्षिणे॥ दक्षे भुजे चांसभा-

गे वामे पार्श्वे भुजेंऽसकौ ॥ पृष्ठाधोभाग ऊर्ध्वे च केशवादीनि वि-
न्यसेत् ॥ चतुर्थ्यंतैर्नमोंतैश्च क्रमाद्वादशनामभिः ॥ एवं शीर्षे
वासुदेवं श्रीवत्सं दक्षिणे स्तने ॥ दंडाकारं ललाटे च पद्मा-
कारं तु वक्षसि ॥ वेणुपत्राकृतिं बाह्वोरन्यान्दीपाकृतीन्न्यसेत् ॥इति
ऊर्ध्वपुंड्रप्रकरणं ॥ पुंड्रोपरि मुद्राधारणमाग्नेये ॥ चक्रशंखग-
दादीनि गोपीचंदनमृत्स्नया ॥ विष्ण्वायुधानि बिभृयाज्ज्ञानमु-
क्तिप्रदानि वै ॥ चक्रमेकं न्यसेद्गंडे दक्षिणे द्विजसत्तमः ॥ शं-
खमेकं वामगंडे ललाटे धारयेद्गदाम् ॥ चक्रद्वयं दक्षकुक्षौ वामे
शंखद्वयं तथा ॥ दक्षभागे तु चक्रस्य द्वयं धार्यं तथैव च ॥ दक्षबाहूर्ध्व-
भागे तु न्यसेच्चक्रद्वयं बुधः॥ तदधः शंखमेकं च मध्ये पद्मद्वयं तथा ॥
वामबाहूर्ध्वभागे तु न्यसेच्छंखद्वयं बुधः ॥ तदधश्चक्रमेकं तु मध्ये

चैव गदाद्वयं ॥ एकैकस्मिन्भुजे न्यस्य नाममुद्राचतुष्टयं ॥ हृदि कंठे दक्षिणांसे चक्रत्रयमुदाहृतं ॥ शंखत्रयं स्याद्वामांसे कुक्षौ चक्रचतुष्टयं ॥ अन्योर्ध्वपुंड्रेषु तथा चक्रशंखादि विन्यसेत् ॥ सर्वत्र नाममुद्रा च एकैका च न संशयः ॥ चक्रद्वयं दक्षकुक्षौ पद्ममेकं न्यसेत्स्तने ॥ वामे तु शंखद्वितयं गदामेकं तु पृष्ठतः ॥ अधोर्ध्वभागद्वितयं एकमेकं सुदर्शनं ॥ चक्रादिमंत्रास्तु ॥ सुदर्शन महाज्वाल कोटिसूर्यसमप्रभ ॥ अज्ञानांधस्य मे नित्यं विष्णोर्मार्गं प्रदर्शय ॥ पांचजन्य निजध्वानध्वस्तपातकसंक्षय ॥ पाहि मां पापिनं घोरं संसारार्णवपातिनं ॥ संसारभयभीतानां योगिनामभयप्रदं ॥ पद्महस्तेन यो देवो योगीशं तं नमाम्यहं ॥ ३ ॥ ब्रह्मांडभुवनारंभे मूलस्तंभो गदाधरः ॥ कौमोदकी करे यस्य

तं नमामि गदाधरं ॥ ४ ॥ नारायण नमस्तेऽस्तु नाममुद्रांकितं नरं ॥ दृष्ट्वैव लभते मुक्तिं चांडालो ब्रह्मघातकः ॥ यज्ञोपवीतवद्धार्याः शंखचक्रादयो द्विजैः ॥ संतप्तेनाग्निना चैव ब्राह्मणेन विशेषतः ॥ प्रक्षाल्यायुधतोयेन शिरोमूलेन मार्जयेत् ॥ नमो मुद्राभ्य इत्युक्त्वा न भुवि स्थापयेच्च ताः ॥ प्रतिष्ठिताभिर्मुद्राभिर्धारणं परिकीर्तितं ॥ प्राणप्रतिष्ठामंत्रं वा न्यस्य तप्त्वा तु धारयेत् ॥ नान्यथा तु फलावाप्तिः कृतं कर्म वृथा भवेदिति ॥ अथ तुलसीमालाधारणमुक्तं स्कांदे ॥ तुलसीकाष्ठजां धात्रीफलपद्माक्षसंभवां ॥ मालां च पंचगव्येन क्षालितां मंत्रयेत्पुनः ॥ मूलमंत्रेण गायत्र्या देवाय विनिवेद्य च ॥ धूपं दीपं च नैवेद्यं दत्वा मंत्रेण पूजयेत् ॥ सद्यो जातं प्रपद्यामि सद्यो जाताय वै नमः ॥ ततो मालां गुरोः कंठे

स्थापयित्वा स्वयं गले ॥ धारयेद्देवतापूजाजपकाले विशेषतः ॥
तुलसीकाष्ठसंभूते माले कृष्णजनप्रिये ॥ बिभर्मि त्वामहं कंठे
कुरु मां कृष्णवल्लभमिति ॥ इति मालाधारणम् ॥ अथ संध्यावं
दनं ॥ मौंजीबंधनमारभ्य सायंप्रातश्च कालयोः ॥ मध्यान्हेऽपि
च कर्तव्यं संध्यावंदनमिष्टदं ॥ गायत्री चैव सावित्री तथैव च
सरस्वती ॥ संध्यात्रये च विज्ञेया देवता विष्ण्वधिष्ठिताः ॥
अथ संध्यावंदनकाल उक्तः ॥ पूर्वां संध्यां सनक्षत्रां उत्तरां सदि-
वाकरां ॥ उत्तरामुपविश्यैवेत्युक्तमाचार्यैः ॥ पूर्वां संध्यां प्रातः
संध्यां उत्तरां माध्यान्हिकीं ॥ पुनरुत्तरग्रहणसामर्थ्यबलात् ।
उत्तरां सायंकालसंध्यां सदिवाकरां कुर्यादित्यर्थः ॥ तां सायं-
कालसंध्यां अर्घ्यजपकाले उपविश्यैव कुर्यादित्यर्थः ॥ प्रातःसं-

ध्यावंदनजपस्य आसूर्यदर्शनात्तिष्ठेत्ततस्तूपविशेत वेति तिष्ठतोऽपि विधानात् सुधांशुसंनिधौ तु मुख्यकाल उक्तः ॥ उत्तमा तारकोपेता मध्यमा लुप्ततारका ॥ अधमा सूर्यसहिता प्रातःसंध्या त्रिधा मता ॥ उत्तमा सूर्यसहिता मध्यमास्तमिते रवौ ॥ अधमा तारकोपेता सायंसंध्या त्रिधा मता ॥ आअर्धयामादासायं संध्या माध्यान्हिकी स्मृतेति ॥ आसार्धयामादासायमिति क्वचित्पाठः ॥ उपासीत द्विजः संध्यां प्राङ्मुखोदङ्मुखोऽपि वा॥गृहे त्वेकगुणा संध्या गोष्ठे दशगुणा स्मृता ॥ सहस्रगुणिता नद्यां अनंता विष्णुसंनिधौ ॥ बहिर्दशगुणेति पाठांतरं ॥ अनंतानंतफलदेत्यर्थः ॥ अथ प्राणायामः ॥ कनिष्ठानामिकाभ्यां च गृहीत्वा वामभागतः ॥ ऱ्हस्वोच्चारणकालाख्या मात्राः षोडश रेचने ॥

द्वात्रिंशत्पूरणे प्रोक्ताश्चतुःषष्टिस्तु कुंभके ॥ दक्षनासापुटेनैव पूर्वं वायुं विरेचयेत् ॥ अंगुष्ठेन पुटं बध्वा नासायां दक्षिणं पुनः ॥ वामभागेन संपूर्य धारयेत्पूर्णकुंभवत् ॥ पंचांगुलीभिर्नासाग्रपीडनं वायुधारणे ॥ मुद्रेयं सर्वपापघ्नी वानप्रस्थगृहस्थयोः ॥ कनिष्ठानामिकांगुष्ठैर्यतेश्च ब्रह्मचारिणः ॥ नासाग्रपीडनं प्रोक्तं मंत्रार्थं स्मृतिपूर्वकं ॥ संध्यादावर्घ्यदाने च प्राणायामैकमाचरेत् ॥ आदावंते च गायत्र्याः प्राणायामास्त्रयस्त्रयः ॥ मंत्रमावर्तयेच्चित्ते त्रिषड्वारमथाऽपि वा ॥ नवद्वादशवारं वा प्राणायामोऽयमीरितः ॥ अयं सगर्भः सफलो मंत्रार्थस्मृतिवर्जितः ॥ अगर्भः स्वल्पफलकः कुर्यात्तस्मात्सगर्भकं । विरेचयेत् । विसर्जयेत् ॥ गायत्रीप्राणायामस्वरूपमाह ॥ योगयाज्ञवल्क्यः ॥ सों-

कारसप्तव्याहृतिकां गायत्रीं च सतारकां ॥ ॐमापोज्योतिसंयु-
क्तामंते चोंकारसंयुतां ॥ दशप्रणवसंयुक्तां मंत्रमेवं हृदि स्मरेत् ॥
त्रिः पठेदायतप्राणः प्राणायामः स उच्यत इति ॥ मंत्रार्थस्तु ॥
ॐनामा भगवान्विष्णुरधिकोच्चगुणत्वतः ॥ भूः पूर्णः । भुवः
लक्ष्म्याः वरः । सुवः अनंतसुखः ॥ महः सर्वपूज्यः॥ जनः सृष्टि-
कर्ता । तपः आलोचनकर्ता ॥ सत्यं । उत्तमानंदज्ञानवान् ।
यः सवित्रंतर्गतो विष्णुः नः अस्माकं । धियः बुद्धीः प्रचोदयात्
प्रेरयेत् ॥ सवितुः जगत्सवितुः देवस्य क्रीडादिविशिष्टस्य विष्णोः
वरणीयं भजनीयं ॥ भर्गः जगत्पोषणप्रेरणकर्तृ । तत् व्याप्तं ॥
अग्न्यंतर्गतपरशुरामरूपं धीमहि ॥ ध्यायेम वयमिति शेषः ॥ ॐ
मापोज्योतिरित्यत्र आपालनादापः । बहुरूपत्वात् स्त्रीरूपत्वात्

विष्णोः बहुवचनांतस्त्रीलिंगशब्दवाच्यत्वं ॥ ज्योतिःप्रकाशरूपं ॥ रसः श्रेष्ठः ॥ अमृतं मोक्षदातृ ॥ ब्रह्म सकलगुणसंपूर्णं ॥ भूर्भुवःसुवरित्येषां अर्थांतरं तु । भूर्नामा स्फूर्तिरूपत्वाद्भूरिवीर्यत्वतो भुवः ॥ सुवः सुबलरूपत्वादित्यैतरेयभाष्ये उक्तं ॥ इति दशप्रणवसंयुक्तगायत्र्याः प्राणायामः ॥ एवमष्टाक्षरादिप्राणायामेषु मंत्रार्थानुसंधानं रेचकपूरककुंभकपूर्वकमंत्रावृत्तिः वायुं धृत्वैव शक्त्यनुसारेण कार्या ॥ प्राणायामांश्चरेत्त्रींस्तु यथाकालमतंद्रितः ॥ अहोरात्रकृतं पापं तत्क्षणादेव नश्यतीति स्मृतिः ॥ प्राणायामत्रयं नाम श्वासोच्छ्वासं धृत्वा उक्तप्रकारेण नववारं मनसा दशप्रणवसंयुक्तगायत्रीमंत्रावृत्तिः ॥ इति प्राणायामप्रकरणं ॥ अथमार्जने ऋग्विधाने उक्तं ॥ प्राणानायम्य विधिवद्वाग्यतः संय-

तेंद्रियः ॥ अथ संध्यामुपासिष्ये इति संकल्प्य मार्जयेत् ॥ नव-
प्रणवसंयुक्तैर्ह्यापोहिष्ठेति पादकैः ॥ वामांगुलिमधः स्थाप्य श्री-
तुलस्या कुशैर्द्विजः॥ तर्जनीमध्यमाभ्यां वा मूर्ध्नि सिंचेज्जलं द्विजः॥
भूमौ शिरसि चाकाश आकाशे भुवि मस्तके ॥ मस्तके च त-
थाकाशे भूमौ च नव धारयेत् ॥ नद्यां तीर्थे ह्रदे वाप्यां रौप्य-
ताम्राादिपात्रके ॥ वामहस्ते जलं धृत्वा कुर्यान्मार्जनमात्मन इति ॥
अष्टाक्षरं नव पदं पादादौ ब्रह्महा भवेत् ॥ पादांते मार्जनं कुर्या-
द्ब्रह्महत्यां व्यपोहति ॥ अपोहिष्ठादिभिः पूतं जलं भूमौ न पा-
तयेत् ॥ सूर्यश्चेत्यादिमंत्रेण मंत्रयित्वा पिबेदपः ॥ आदिशब्दा-
न्माध्यान्हिकसंध्यायां । आपः पुनंत्विति मंत्रेण । सायंकाले अ-
ग्निश्चेत्यनेन मंत्रेणेति ग्राह्यं ॥ तत आचम्य नवभिः आपोहि-

ष्टेति पादकैः ॥ शंनोदेवीत्यष्टभिश्च अर्धर्चैस्तिसृभिस्तथा ॥ इदमापः प्रवहतेत्यादिऋग्भिश्च मार्जयेत् ॥ ऋतंचेति पिबन् विद्वान् पापमामरणांतिकं ॥ मनोवाक्कायजं सर्वं क्षपयेदघमर्षणं इति ॥ आपस्तंबैर्दधिक्राव्णेत्यादिमंत्रैस्तु मार्जयेत् ॥ शिवेन मा-चक्षुषेति जह्वा पापं नरः क्षिपेत् ॥ पारिजाते तत्प्रकार उक्तः ॥ उद्धृत्य सजलं हस्तं दक्षगोकर्णवत्कृतं ॥ निधाय नासिकाग्रे तु पापं च पुरुषं स्मरन् ॥ दक्षनासापुटेनैव पापात्मानं व्यपोह-येत् ॥ तज्जलं नावलोक्याथ वामभागे क्षितौ क्षिपेत् ॥ मार्जनं मंत्रपूतस्य जलस्य प्राशनं तथा ॥ मनोवाक्कायजं पापं नाशयेदघ-मर्षणं ॥ इति मार्जनं ॥ अथार्घ्यमाह वसिष्ठः ॥ प्रोक्ष्योत्थाय प्र-

त्यहं तु दद्यादर्घ्यत्रयं द्विजः ॥ गायत्र्या सूर्यसंस्थं हि ध्यात्वा विष्णुं सनातनं ॥ द्वौ पादौ च समौ कृत्वा रविं वीक्ष्य जलांजलिं ॥ गो-शृंगमात्रमुद्धृत्य पाणिना प्रक्षिपेज्जले ॥ व्यासः ॥ ॐकारात्तो-यमादाय गायत्र्या चाभिमंत्रितं ॥ आदित्याभिमुखस्तिष्ठन् त्रिः क्षिपेत्संध्ययोर्द्वयोः ॥ अंगुष्ठाभ्यां तु तर्जन्योः स्पर्शनं तु विवर्ज-येत् ॥ उक्तकालमतिक्रांते दद्यादर्घ्यचतुष्टयं ॥ स्थले अर्घ्यदाने विशेषः ॥ शुद्धतृणादिनाच्छाद्य भूमिं तत्रांजलिं क्षिपेत् ॥ सर्व-कालमुपास्या तु संध्यायाः पार्थिवेष्यते ॥ अन्यत्र सूतकाशौचवि-भ्रमातुरभीतित इति विष्णुपुराणे ॥ सूतकमृतकभ्रांतिरोगचोरा-दिभयाद्यभावे संध्यावंदनस्य नित्यत्वमुक्तं ॥ अकरणे प्रत्यवाय-

१ प्रति ह्यर्कमित्यन्येषु पुस्तकेषु ॥

श्चात्रिणोक्तः ॥ नोपतिष्ठंति ये संध्यां स्वस्थावस्थास्वपि द्विजाः ॥ चंडालास्ते तु विज्ञेया न तेषां सुगतिर्भवेत् ॥ हिंसंति व महापापा भगवंतं दिवाकरमिति ॥ अर्घ्यं दत्वा केशवादीन् शुक्लपक्षे तु द्वादश ॥ तर्पयेत्कृष्णपक्षे तु तथा संकर्षणादिकान् ॥ ततः प्रदक्षिणं कुर्यादसावादित्यमंत्रतः ॥ सूर्यस्थितं हरिं ध्यात्वा ततः पश्चाद्द्विराचमेत् । इति ॥ अथब्रह्मयज्ञतर्पणं ॥ तदुक्तमाचार्यैः ॥ गायत्र्याचांजलिं दत्वा ध्यात्वा सूर्यगतं हरिम् ॥ मंत्रतः परिवृत्याथ समाचम्य सुरादिकान् ॥ तर्पयित्वा निपीड्याथ वासो विस्तृत्य चांजसा ॥ अर्कमंडलगं विष्णुं ध्यात्वैव त्रिपदीं जपेत् इति ॥ अथ अर्घ्यानंतरं तर्पणोक्तया मध्ये ब्रह्मयज्ञो ज्ञेयः ॥ तथा च व्याघ्रपादः ॥ देवान् ऋषींश्च पित्रादीन् स्वशाखाविधिचोदि-

तान् ॥ तर्पयेद्ब्रह्मयज्ञांते स्नानांते तु विशेषत इति ॥ स्नानांते चेत्यनेन जलतर्पणमुच्यते ॥ ब्रह्मयज्ञकालस्तु । आपस्तंबशाखायां स्वाध्यायब्राह्मणे उक्तः ॥ मध्यंदिने प्रबलमधीयीतेति ॥ य एवं विद्वानहोरात्रउषस्युदित इति च ॥ अत्र उषसीत्यनेन अरुणोदयो ग्राह्यः ॥ प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपीत्यमरेण अहरारंभकालस्य अरुणोदयात्मकस्य उषःशब्दवाच्यत्वोक्तेः ॥ महारात्रशब्देन रात्रिं त्रिभागां कृत्वा तृतीयो भागो ग्राह्यः ॥ महारात्रशब्दस्य अर्धरात्रवाचयत्वेऽपि मुख्यार्धरात्रस्य कर्मकालत्वाभावात् तं त्यक्त्वा अमुख्यो गृह्यते ॥ रात्रितृतीयभागे अर्धरात्रांशघटिकात्रयस्य प्रवेशाच्च मुख्यो वा ॥ इदं च

द्वादशीस्वल्पत्वे रात्रितृतीयभागे आमध्यान्हाः क्रियाः सर्वा इति वचनेन सूर्योदयात्पूर्वं प्रातःसंध्यावंदनादिमाध्यान्हिकसंध्यावंदनपर्यंतं सर्वकर्मणां कर्तव्यत्वोक्तेः ॥ तस्मिन् दिवसे अर्घ्यांते ब्रह्मयज्ञकालविधायकं महारात्रपदं न तु प्रतिदिनं तु ॥ अरुणोदये वा सूर्योदये वा मध्यान्हे वा ब्रह्मयज्ञः कार्यः ॥ उषस्युदित इत्यादिविधानात् ॥ यत्तु वसिष्ठेन कृतानित्यक्रियाकांडः कृतहोमो जितेंद्रियः ॥ ग्रामात्प्राचीनभागे तु यत्र तिष्ठेज्जलाशयः॥ अपां समीपे नियतः ब्रह्मयज्ञं समाचरेदित्युक्तं ॥ मध्यंदिने प्रबलमधीयीतेति श्रुतौ च उक्तं तत्तु ॥ अशक्तविषये केनचिन्निमित्तेन अरुणोदयस्नानासंभवे वा ज्ञेयं ॥ श्रीमदाचार्यैः अ-

१ स्वल्पवेध इति चान्यस्मिन् पुस्तके ॥

र्घ्यानंतरं अरुणोदये तर्पणविधानेन तर्पणात्पूर्वं अरुणोदय एव ब्रह्मयज्ञस्य प्राप्तेः ॥ आसूर्यदर्शनात्तिष्ठेदिति तर्पणानंतरं क्रियमाणगायत्रीजपकाले सूर्योदयपर्यंतं अवस्थानोक्त्या ब्रह्मयज्ञतर्पणस्यारुणोदयकालिकत्वासिद्धेः ॥ वसिष्ठस्मृत्यपेक्षया सदाचारस्मृतावुक्तव्यासवाक्यस्य प्राबल्यात् ॥ श्रीमदाचार्यैः स्मृतिषु विरुद्धासु प्राप्तसंशयनिवृत्त्या सम्यगनुष्ठानार्थं कर्मानुष्ठानमध्ये हरिस्मरणार्थं च व्यासवाक्यानामुदाहृतत्वात् ॥ नहि सदाचारस्मृतिमात्रेण शौचाचमनादि कर्मानुष्ठानंसिध्यति ॥ तत्प्रकारविधेरनुक्तत्वात् ॥ अतः शौचादिकरणप्रकरणज्ञानार्थं स्मृतिषु द्रष्टव्यासु श्रुतिषु स्थितस्य कालस्य क्रमादेश्च ग्रहणे सदाचारस्मृतेर्वैय र्थ्यापत्तेः ॥ न च सदाचारस्मृतिः सावकाशा ॥ गायत्र्या चांज-

लिं दत्वा ध्यात्वा सूर्यगतं हरिं॥ मंत्रतः परिवृत्त्याथ समाचम्य सुरादिकान्॥ तर्पयित्वा निपीड्याथ वासो विस्तृत्य चांजसा॥ अर्कमंडलगं विष्णुं ध्यात्वैव त्रिपदीं जपेत्॥ इति क्रमनियामकत्वात्प्रत्ययाथशब्दयोः निरवकाशयोः सत्वेन तद्विरोधापत्तेः॥ अतएव पूर्वमीमासायां। द्वादशाहे सत्रयागे अध्वर्युः गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयतीत्यादौ त्वाप्रत्ययस्य समानकर्तृकयोः पूर्वकालविहितत्वात् श्रौतं कर्माश्रित्य यजमानदीक्षानंतरं ब्रह्मणो दीक्षांगीकृता॥ न च स्मृतीनां प्राबल्यं निर्णयत्वेन दौर्बल्यात्॥ सदाचारस्मृत्युदाहृतव्यासस्मृतेर्निर्णायकत्वेन प्राबल्यात्॥ तदनुसारेणैव कर्मानुष्ठानस्य आवश्यकत्वात्॥ विष्णुतीर्थीये॥ देवादितर्पणात्पूर्वं संध्यांगत्वेन यो जपेत्॥ गायत्रीं

चान्यमंत्रांश्च तज्जपो निष्फलो भवेदिति प्रत्यवायोक्तेश्च ॥
ननु न कर्मणि कर्मारंभ इति निषेधात् ॥ संध्यावंदनाख्यकर्म-
मध्ये ब्रह्मयज्ञतर्पणं चेति प्रधानकर्मद्वयं कथं कार्यमिति चेन्न ॥
अस्य निषेधस्य सामान्यत्वेन ॥ गायत्र्या चांजलिं दत्वा अथ
ब्रह्मयज्ञानंतरं समाचम्य सुरादिकान् तर्पयित्वा वासः वस्त्रं-
निष्पीडय विस्तृत्य त्रिपदीं जपेदिति विशेषवाक्येन बाधात् ॥
अपवादाभावस्थले अस्य निषेधस्य सावकाशत्वात् ॥ अतएव
ज्योतिष्टोमादिकर्तृभिः बहुदिवससाध्यज्योतिष्टोमादिमध्ये नि-
त्यकर्मस्नानसंध्यावंदनादिकं विशेषवाक्यबलात् क्रियत एव ॥
अथ वा अर्घ्यांत एव प्रधानसंध्या जपोपस्थानादिकं तु तदंगं ॥
अतएव सूतकादौ अर्घ्यांतमेव संध्यावंदनं क्रियते ॥ जपोप-

स्थानादिनिषेधात् तन्न क्रियते ॥ तावन्मात्रस्यैव प्रधानसंध्यात्वेन ब्राह्मण्यसिद्धेः ॥ अतो न कर्मणि कर्मारंभ इति निषेधस्य प्राप्तिरेव नास्तीति ॥ इति ब्रह्मयज्ञकालनिर्णयः ॥ ॥ अथ ब्रह्मयज्ञकरणप्रकारः ॥ प्रक्षाल्य पादौ हस्तौ च द्विराचम्य कुशासने ॥ उपविश्य प्राङ्मुखो वा दर्भपाणिरुदङ्मुख इति ॥ आचमनं तु आपस्तंबशाखायां ॥ ततः दक्षिणत उपवीतयोपविश्य हस्ताववनिज्य त्रिराचमेत् ॥ द्विः परिमृज्य सकृदुपस्पृश्य । यत्सव्यं पाणिपादौ प्रोक्षति । शिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभेत्युक्तं ॥ उपवीतया उपवीतं दक्षिणभागत एव स्थापयित्वेत्यर्थः ॥ अवनिज्य प्रक्षाल्य । त्रिराचमेत् त्रिवारं मुखमध्ये गायत्रीपादत्रयेणोदकं गृह्णीयात् । द्विः परिमृज्येत्यादौ आपो-

हिष्ठेत्यादिनवपादैः। ॐ भूः इत्यादि द्वादशमंत्रैः। पूर्वोक्ताचमन-
स्थलेषु क्रमेणोदकेन स्पर्शो ज्ञेयः ॥ तथा चाश्वलायनः ॥ गा-
यत्र्या त्रिः पिबेदापोहिष्ठेति नवभिः स्पृशेत् ॥ व्याहृतिभिः शि-
रोमंत्रैरंगानि ब्रह्मयज्ञकैः ॥ ततः प्राणानायम्य। ब्रह्मयज्ञेन य-
क्ष्य इति संकल्प्य ॥ वामपादोपरि दक्षिणपादं वामहस्तोपरि दक्षि-
णहस्तं स्थापयित्वा ॥ अथवा हस्तांगुष्ठं दक्षिणहस्तांगुष्ठेन धृत्वा
दक्षिणतर्जन्या ह्यंगुलिचतुष्टयं वामांगुष्ठतर्जनिमध्ये कुशे श्रीतु-
लसीसहितं स्थापयित्वा कुक्कुटासनेनोपविश्य दक्षिणजानूपरि
न्यसेत् ॥ ततः विद्युदसि विद्यमे पाप्मानमृतात्सत्यमुपैमीति मंत्र-
मुक्त्वा सकृत्प्रणवकं सकृत्तिस्रोव्याहृतीश्चोच्चार्य ॥ ततः गायत्रीं
पादशः अर्धर्चशः ऋक्शः उच्चारयेत् ॥ तत्प्रकारस्तु ॥ ॐ भूर्भु-

वः स्वः। तत्सवितुर्वरेण्यं। भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। इति पादशः। ॐतत्सवितुर्वरेण्यं भर्गोदेवस्यधीमहि॥ धियो यो नः प्रचोदयात्॥ इतिअर्धर्चशः। ॐतत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नःप्रचोदयात्॥ इतिऋक्शः॥ अग्निमीळेति सूक्तं। वायवायाहीति सूक्तं। पुरुषसूक्तम्। अग्निर्वैदेवानामवमो विष्णुरिति ब्राह्मणं॥ अथ महाव्रतं। एष पंथा एतत्कर्म॥ अथातः संहिताया उपनिषत्॥ विदामघवन्विदा महाव्रतस्य पंचविंशतिं सामिधेन्य इति उपनिषदं॥इषेत्वोर्जेत्वेति यजुर्वेदं॥ अग्न आयाहीति सामवेदं॥ शन्नोदेवीरित्यथर्वणवेदं॥ नारायणं सुरगुरुं॥ अशोच्यानन्वशोचस्त्वमिति भारतं॥ जन्माद्यस्य यतोन्वयादिति भागवतं॥ अथशिक्षां प्रवक्ष्यामीति शिक्षां॥

समाम्नायः समाम्नात इति निरुक्तं ॥ वृद्धिरादैच् इति व्याकरणं ॥ मयरसतजभनलगसंमितमिति छंदः ॥ पंचसंवत्सरमयमिति ज्योतिषं ॥ गौःग्मेति निघंटं । अथैतस्य समाम्नायस्येति कल्पसूत्रं॥अथातो धर्मजिज्ञासेति पूर्वमीमांसा ॥ अथातो दैवी मीमांसासविष्णुराहितं ब्रह्मेत्याचक्षत इति दैवी मीमांसा ॥ अथातो ब्रह्मजिज्ञासेति ब्रह्ममीमांसा ॥ तथा श्रीमद्भाष्यादिकं च किंचित्किंचित्पठित्वा । तच्छंयोरावृणीमहे इत्यादिकमुक्त्वा । यस्यस्मृत्येति सर्ववेदादिप्रतिपाद्यविष्णोः समर्प्य पुनराचमनद्वयं कृत्वा देवर्षिपितृनामकं देवर्षिपित्रंतर्गतश्रीविष्णुप्रीत्यर्थं देवर्षिपितृतर्पणमहं करिष्ये ॥ इति संकल्प्य । देवादितर्पणं कुर्यात् ॥ तत्प्रकारमाह व्यासः ॥ एकैकमंजलिं देवा द्वौ द्वौ तु ऋषयस्तथा ॥ अर्हंति

पितॄंस्त्रींस्त्रीं स्त्रियश्चैकैकमंजलिमिति ॥ अत्र देवादितर्पणे देवा-
दिनाम्नामेव मंत्रत्वात् कर्मावृत्तौ मंत्रावृत्तेरावश्यकत्वात् ॥ ऋषि-
तर्पणे शतर्चिनस्तृप्यंतु शतर्चिनस्तृप्यंतु इत्यादि प्रकारेण द्वि-
वारं ऋषिनामग्राह्यं ॥ एवं पितृतर्पणे पितृनाम त्रिवारं ग्राह्यं ॥
अनामिक्यां हेम धृत्वा तर्जन्यां रौप्यमेव च ॥ जलदर्भैः स्वधा
मंत्रैर्गोत्रनामतिलैर्भवेत् ॥ ताम्रगोकर्णपात्रेण तर्पयेदन्यथा वृथा ॥
अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ॥ शालग्रामशिलाती-
र्थयुक्तेनैव जलेन तु ॥ देवादितर्पणं कुर्यादन्यथा निष्फलं भवेत्
इति ॥ विना तीर्थेन यः कुर्यात्तर्पणं पितृदेवताः ॥ रेतोमूत्रपुरी-
षांश्च स पितृभ्यः प्रयच्छति ॥ शालग्रामशिलातोयैस्तर्पयेत्पितृ-
देवताः ॥ अमृतेन समं भूत्वा नित्यतृप्ता न संशयः ॥ सव्येन पा-

णिना वामहस्तेन अन्वारब्धेन वा स्पृष्टेन वा दक्षिणेन पाणिना तर्पणं कुर्यादित्यन्वयः ॥ इदं तु ऋग्वेदिनां ॥ यजुर्वेदिनां तु अंजलिना तर्पणमुक्तं ॥ कुशाग्रैश्चैव देवानामृषीणां कुशमध्यतः ॥ पितॄणामग्रमूलाभ्यां कुर्यात्तर्पणमंजसा ॥ उपवीती देवताश्च निवीती तर्पयेदृषीन् ॥ अपसव्येन तु पितॄन् विभक्त्या तु द्वितीययेति॥ पितॄणां तिलतर्पणे विशेषमाह योगयाज्ञवल्क्यः ॥ ये च पाणिस्थले स्पृष्टा रोमकूपे तु ये धृताः॥ तैस्तिलैस्तर्पणं कुर्वन् पितृघाती भवेद्द्विजः ॥ तस्मात्ते मणिबंधे तु धार्या विप्रैः समाहितैः ॥ जलस्थस्तु जले कुर्यात्तर्पणं स्थलगः स्थले ॥ तर्पणं पितृतर्पणं ॥ वामपादं जले कृत्वा दक्षपादं स्थले तथा ॥ हारीतः ॥ वसित्वा वसनं शुष्कं स्थले विस्तीर्णबर्हिषि ॥ देवादितर्पणं कुर्यान्न-

पात्रे नोदके तथा ॥ हेमरूप्यमयं पात्रं ताम्रकस्य समुद्भवं ॥ देवादितर्पणे ग्राह्यं मृन्मयं तु परित्यजेत् ॥ मार्जनं तर्पणं श्राद्धं न कुर्याद्वारिधारयेति ॥ रवौ शुक्रे त्रयोदश्यां सप्तम्यां निशि संध्ययोः ॥ नंदासु जन्मदिवसे मघायां भौमवासरे ॥ भृत्यपुत्रकलत्रार्थं न कुर्यात्तिलतर्पणमिति ॥ तर्पयेत्प्राङ्मुखो देवान् ऋषींश्चोदङ्मुखः पितॄन् ॥ दक्षिणाभिमुखश्चैवं तर्पणस्य विधिः स्मृतः ॥ विवाहे चोपनयने चौले सति यथाक्रमं ॥ वर्षमर्धं तदर्धं च नेत्येके तिलतर्पणं । इति ॥ अस्यापवादः ॥ विवाहे पातसंक्रांतौ ग्रस्ते शशिनि भास्करे ॥ नैव वारादिदोषोऽस्ति मन्वादिषु युगादिषु ॥ विवाहे ।विवाहमुंजीचौलेषु जातेष्वित्यर्थः॥ अंगुल्यग्रैस्तथा देवान्कनिष्ठामूलतो ऋषिन् ॥ पितॄन् दिव्यानदिव्यांश्च तर्जन्यंगुष्ठमध्यतः ॥ तत्र

दिव्याः स्वसूत्रोक्ता अदिव्या जनकादयः इति स्कांदे ॥ जनकादयः पितरस्तु कालतरंगे महालयं[1]प्रसंगे उक्ताः ॥ त एव तर्पणे ज्ञेयाः॥ देवदेवर्षिदिव्यपितरस्तु स्वस्वगृह्यसूत्रोक्ता ज्ञेयाः ॥ यद्यप्याश्वलायनसूत्रे देवतातर्पणे देवतास्तर्पयंति। प्रजापतिर्ब्रह्मेत्येवोक्तेः ॥ अग्निविष्णोरनुक्तावपि शौनकस्मृतौ तयोरुक्तेः॥ तर्पणकाल आदौ तौ गृह्येते ॥ ऋषितर्पणेऽपि सूत्रे सनकादीनामनुक्तावपि। मत्स्यपुराणे ॥ सनकश्च सनंदश्च तृतीयस्तु सनातनः ॥ कपिलश्चासुरिश्चैव वोढुं[2]ः पंचशिखस्तथा ॥ सर्वे ते तृप्तिमायांतु मद्दत्तेनांबुनाखिलाः ॥ इत्युक्तेः ऋषितर्पणं गृह्यते ॥ पितृतर्पणे स्वसंबंधादिकं च

---

१ महाकालतरंगे महालयप्रकरणे इत्यन्यत्र पुस्तके पाठांतरं ॥

२ वोटः पंचशिखस्तथा इत्यप्येकस्मिन्पुस्तके ॥

ग्राह्यं ॥ संबंधनामगोत्राणि तथा वस्वादिरूपतां ॥ स्वधाशब्दं नमः शब्दमुक्त्वा संतर्पयेत्पितॄन् ॥ इति बोधायनोक्तेः ॥ प्रपितामहे तु निर्दिष्टो वासुदेवः परः पुमान् ॥ पितामहे तु निर्दिष्टस्तथा संकर्षणः प्रभुः ॥ पितृसंस्थस्तु विज्ञेयः प्रद्युम्नो ह्यपराजित इति ॥ विष्णुधर्मोत्तरे ॥ पित्राद्यंतर्यामिवस्वाद्यंतर्यामित्वेन प्रद्युम्नादीनां ग्रहणमुक्तं ॥ स्नानमज्जनपूर्वं तु क्वचित्कर्तुं न शक्यते ॥ तत्रादौ ब्रह्मयज्ञार्थं मंत्रस्नानं विधीयते ॥ पुण्यकालनिमित्तं तु केवलं तर्पणं स्मृतं ॥ देवर्षितर्पणं स्मृतमिति वा पाठः ॥ प्रातःकाले ब्रह्मयज्ञादिकृते सति मध्ये संक्रमणादिपुण्यकाले प्राप्ते सति तन्निमित्तं पुनस्तर्पणमात्रं कार्यं ॥ न ब्रह्मयज्ञादि कार्यमित्यर्थः ॥ तथा स्मृत्यंतरं ॥ नैमित्तिकं तर्पणं तु कुर्याद्रात्रावपि द्विजः ॥ तीर्था-

तरे तु तद्भवत्स्यादेकमप्यत्र सद्भवेत् ॥ नैमित्तिकं तर्पणं तु ब्रह्मयज्ञं तु बहृचः ॥ रात्रौ प्रहरपर्यंतं दिवाकर्म तु कारयेत् ॥ विना सौरं ब्रह्मयज्ञं न कृतानि दिवा यदीति ॥ श्राद्धांगतर्पणं यामे प्रथमे मधु तद्भवेत् ॥ पयो नारं च रुधिरं क्रमाद्यामेषु च त्रिषु ॥ श्राद्धात्पूर्वं ब्रह्मयज्ञं न कुर्यात्तर्पणं तथा ॥ पित्रोः श्राद्धानंतरं तु द्वयं कुर्याच्च बहृचः । तर्पणे पवित्रमाह सुमंतुः ॥ समूलाग्रौ विना गर्भौ कुशौ द्वौ दक्षिणे करे ॥ तथा सव्ये द्विजः स्त्रीन्वै बिभृयात्सर्वकर्मसु ॥ बोधायनः ॥ हस्तयोरुभयोर्द्वौद्वौ बिभृयादासनेऽपि चेति ॥ व्यासः ॥ तर्पणादीनि कार्याणि पितॄणां यानि कानि चित् ॥ तानि स्युर्द्विगुणैर्दर्भैः सत्पवित्रैर्विशेषत इति ॥ इदं तु सुवर्ण-

१ मनुरिति च पाठोऽन्यस्मिन् ॥ २ सप्तपत्रैरित्यन्यत्र पुस्तकेषु ॥

पवित्राभावे तस्मिन्सति तु विशेषफलप्रदं च ॥ काशहस्तस्तु नाचामेत्कदाचिद्विधिशंकया ॥ प्रायश्चित्तेन युज्येत दूर्वाहस्तस्तथैवचेति व्याससस्मृतिः ॥ लघुहारीतः ॥ पथि दर्भाश्चितौ दर्भाः येदर्भा यज्ञभूमिषु ॥ तर्पणासनपिंडेषु षड्दर्भान्परिवर्जयेत् ॥ मासे नभस्यमावास्यां गृहीताश्चेद्विजैर्यदा ॥ अयातयामास्ते दर्भा नियोज्यास्तु पुनःपुनरिति ॥ नभसि श्रावणे मासि पुनःपुनर्नियोज्याः ॥ पूर्वं स्नानतर्पणादौ ये गृहीताः । त एव पुनर्द्वितीयस्नानादौ ग्राह्या इत्यर्थः ॥ शातातपः ॥ जपे होमे तथा दाने स्वाध्याये पितृतर्पणे ॥ अनामिक्यां हेम धार्यं तर्जन्यां रौप्यमेव च ॥ न रूप्यं केवलं धार्यं दैवे पित्रे च कर्मणीति ॥ कुशपवित्रग्रंथिलक्षणं तु। चतुरंगुलमग्रं च ग्रंथिरेकांगुलिर्भवेत् ॥ द्व्यं-

गुलं रज्जुवलयं पवित्रस्य तु लक्षणं ॥ यज्ञोपवीतमौंजास्तु तथा कुशपवित्रके ॥ ब्रह्मग्रंथिर्विजानीयादन्यत्र च यथारुचि ॥ ब्रह्मग्रंथिस्तु पवित्रग्रंथिः । प्रथमं लंघयेत्पर्वं द्वितीयं नैव लंघयेत् ॥ तयोस्तु पर्वयोर्मध्ये पवित्रं धारयेद्द्विजः ॥ कूर्चेण वा पवित्रेण येन कर्माणि कारयेत् ॥ तस्य ग्रंथिं विसृज्यैव कर्मांते तत्त्यजेद्द्विजः ॥ अग्रेऽगुल्याः स्थितो दर्भस्तपोवृद्धिकरो मतः ॥ मध्ये प्रजाकामकरो मूले सर्वार्थसाधकः ॥ एवं हि फलभेदास्तु स्थानभेदेन धारणात् ॥ जपकर्महरा ये वै अदर्भा असुरास्तु ते ॥ सपवित्रं द्विजं दृष्ट्वा विद्रवंति दिशो दश ॥ ब्रह्मयज्ञे जपे तस्मात्पवित्रं धारयेद्द्विजः ॥ इतिपवित्रप्रकरणं ॥ देवर्षिपितृतर्पणानंतरं

१ अव्यक्ता इत्यन्यत्र ॥

संक्षेपतः सर्वतर्पणमुक्तं विष्णुपुराणे ॥ आब्रह्मस्तंबपर्यंतं जग-
तृप्यत्विति ब्रुवन् ॥ क्षिपेत्तिलोदकं भूमौ कुर्वन्संक्षेपतर्पणमिति ॥
तर्पणानंतरं वस्त्रनिष्पीडनमाह योगयाज्ञवल्क्यः ॥ यावद्दे-
वानृषींश्चैव पितृंश्चापि प्रतर्पयेत् ॥ तावन्निष्पीडयेद्वस्त्रं येन
स्नातो भवेद्द्विजः ॥ येन परिधानवस्त्रेणेत्यर्थः ॥ वस्त्रं निष्पीडये
द्भूमौ न द्वादश्यां न संक्रमे ॥ चतुर्दश्यां श्राद्धदिने न च क्षा-
रेण योजयेत् ॥ जीवत्पितृकस्य तर्पणे विशेषः ॥ कव्यवाहो-
ऽनलः सोमो यमश्चैवार्यमा तथा ॥ अग्निष्वात्ता बर्हिषदः सो
मपा आज्यपास्तथा ॥ सपदि स्याज्जीवत्पितृकः एभ्यो दद्या-
ज्जलांजलिमिति ॥ नीष्पीडनानंतरं वस्त्रप्रसारणं ॥ तर्पयित्वा नि-
पीडयाथ वासो विस्तृत्येत्याचार्योक्तेः ॥ प्रागग्रमुदगग्रं वा धौतं

वासः प्रसारयेत् ॥ दक्षिणाग्रं पश्चिमाग्रं चेत्पुनः क्षालने भवेत् ॥ इति तर्पणप्रकरणं ॥ अथ जपः ॥ तस्य स्थानविशेषः ॥ गृहे त्वेकगुणः प्रोक्तो गोष्ठे शतगुणो भवेत् ॥ सहस्रं पुण्यतीर्थेषु ह्यनंतं विष्णुसंनिधौ ॥ विष्णोस्तु पूर्वदिग्भागे जपो ह्यायुष्यवर्धनः ॥ दक्षिणे ज्ञानदः स स्यात्पश्चिमे मोक्षसाधनः ॥ लक्ष्मीप्रदश्चोत्तरे स्याद्देवाग्रे सर्वसिद्धिद इति स्मृत्यंतरे ॥ अथासनं ॥ तच्च बाह्यशरीरभेदाद्द्विविधं ॥ कुशासने दुःखनाशं कंबले दुखमोचनं ॥ व्याघ्र कृष्णाजिनेज्ञानसिद्धिरायुः प्रजायते ॥ भूमिकाष्ठतृणादीनामासनं परिवर्जयेत् इति॥ विशेषस्तु ॥आसनं तु जपे ध्याने चैलाजिनकुशोत्तरं ॥ चैलाजिने इत्यस्यार्थः ॥ भूमौ कुशासनं प्र-

---

१ पुष्पासने इत्यपरेषु पुस्तकेषु ॥

स्थाप्य तदुपरि व्याघ्रचर्मादि तदुपरि वस्त्रमिति कंबलादिवस्त्रमिति बाह्यासनं ॥ शरीरं त्रेधा पद्मस्वस्तिकवीरभेदेनोक्तं पंचरात्रे ॥ उर्वोरुपरिसंन्यस्य सम्यक्पादतले शुभे ॥ पद्मासनमिति प्रोक्तं योगिनां हृदयंगमं ॥ ऊर्वोरधस्तात्सम्यक्च कृत्वा पादतले उभे ॥ ऋजुकामो विशेद्योगी स्वस्तिकं तत्प्रचक्षते॥एकपादमधः कृत्वा विन्यस्योरौ तथोत्तरं ॥ ऋजुकायो विशेद्योगी वीरासनमितीरितं॥ अथ जपमाला ॥ हस्तेन वा मालया वा गायत्रीजपमाचरेत् ॥ वेदमाता तु गायत्री वेदः पर्वसु गीयते ॥ तस्माज्जपेच्च गायत्रीं पर्वभिर्द्विजसत्तम इति ॥ उक्तः संध्यावंदनगायत्रीजपः हस्तपर्वभिः शिष्टैः क्रियते ॥ अष्टमहामंत्रांतर्गतगायत्रीजपस्तु जपमालया ॥ अक्षास्थिमात्रा मणयः श्रेष्ठाः स्युर्जपकर्मणि ॥ धात्रीफला-

स्थिमाला तु मध्यमा कमलासना ॥ बदर्यस्थिप्रमाणास्तु कनि-
ष्ठा मणयः स्मृताः ॥ अक्षास्थिमाला रुद्राक्षपरिमाणा इति केचि-
त् ॥ कमलबीजमध्यगर्भप्रमाणा इति गुरवः ॥ एवमुत्तरत्रास्थि-
शब्देन बीजं ग्राह्यं ॥ स्वर्गापवर्गदा माला रजतस्वर्णरत्नजा ॥
श्वेतपद्माक्षमालाभिर्जपस्य ह्यमितं फलं ॥ तुलस्यास्तु फलं
नालं वक्तुं शेषोऽपि तत्त्वतः ॥ तुलसीकाष्ठमणिभिः कृता या जप-
मालिका ॥ गायत्र्यादिजपः प्रोक्तः कृतोऽभीष्टप्रदायक इति ॥
अष्टोत्तरं शतं संख्या मणीनां श्रेयसी भवेत् ॥ तदर्धं मध्यमा
प्रोक्ता अधमा सप्तविंशतिः ॥ अत्र फलं ॥ त्रिंशदक्षकृता माला
जयदा जपकर्मणि ॥ अष्टाविंशतिसंख्याकैरक्षैः पुष्टिः सदा
भवेत् ॥ पंचविंशतिसंख्याकैः कृता मुक्तिं प्रयच्छति ॥ मणींस्तु

क्षालयेत्पंचगव्यैर्वेदांतविद्यया ॥ आरोपयेत्क्षौमसूत्रे शाणकेशा-
दिवर्जिते ॥ कार्पासे राजते स्वर्णे सूत्रे प्रोताः प्रशोधिताः ॥ पृ-
ष्ठेन पृष्ठभागे च मुखभागे मुखेन च ॥ संबंधात्सूक्ष्ममणिभिर्म-
ध्येमध्ये च सांतरं ॥ कृत्वा तु कटकाकारं तत्सूत्रे तु मणिं न्यसेत् ॥
मेरुं तदुपरि न्यस्य मणिं तदुपरि न्यसेत् ॥ स्मृत्यंतरे ॥ जपमाला
प्रत्युक्ता ॥ तत्र पुण्याहं वाचयित्वा । तत्र देवस्याग्रे गोमयेनोप-
लिप्य । रंगवल्यादि पद्मं विलिख्य । तत्र चक्राब्जं विलिख्य ॥
तिलतंडुलशालीन् प्रस्थाप्य तत्र कुशं नववस्त्रोपरि मालां स्थाप्य ॥
नववस्त्रेणाच्छाद्य ॥ तत्समीपे वा कुंडे वा स्थंडिले वाग्निं प्रति-
ष्ठाप्य । अग्नौ परशुरामं ध्यात्वा॥ पापपुरुषदहनशोषणादिकं कृत्वा ॥

१ करे कृत्वेत्यन्यत्र पाठः ॥ तद्ग्रंथे तु मणिं न्यसेदित्यन्यत्र ॥

तत्त्वन्यासादि कृत्वा ॥ पीठावरणदेवतापूजां कृत्वा ॥ नारायणा-
ष्टाक्षरमंत्रदेवतादिध्यानं कृत्वा ॥ तत्राग्निपुरुषे बद्धांजलौ मेघश्यामं
चतुर्भुजं वरदाभयहस्तकं अक्षमालां च बिभ्राणं जनार्दनं यज्ञ-
पुरुषं ध्यात्वा समिच्चरुघृतैरष्टाक्षरादिमंत्रैः प्रत्येकमष्टोत्तरशतं
जुहुयात् ॥ अथ मालां ततः शुद्धां शालिग्रामसमर्पितां ॥ अष्टा-
क्षरादिमंत्रैस्तु मंत्रितां गुरुहस्ततः ॥ गृहीत्वा कुंकुमाक्रांतां प्रणम्य
जपमाचरेत् ॥ मध्यमानामिकांगुष्ठैर्जपेन्नान्यैः कदा च न ॥ तर्ज-
न्या न स्पृशेन्मालां कनिष्ठेन कदा च न ॥ जपमाला प्रगोप्तव्या
जपकाले सुमेधसा ॥ परदृष्टिकृता माला निष्फला जपकर्मणि ॥
अक्षमाला प्रगोप्तव्या गुरोरपि न दर्शयेत् ॥ पाते तु जपमा-
लाया मेरोरुल्लंघने सति ॥ प्राणायामत्रयं कृत्वा घृत्वापोशनमा

चरेत् ॥ अप्रतिष्ठितमाला या तज्जपो निष्फलो भवेत् ॥ न वामेन स्पृशेन्मालां करेण ब्राह्मणः क्वचित् ॥ करे कंठेऽथवांगुल्यां धारयेन्न कदाचनेति ब्रह्मतर्के ॥ नान्यांगुलिभिराकर्षेन्न नखैश्च तथा स्पृशेत् ॥ मध्यांगुल्याकर्षणं स्यात्सर्वसिद्धिप्रदायकं ॥ मुखमारभ्य पृष्ठांतं जप्त्वा मेरोः प्रदक्षिणं ॥ भ्रामयित्वा पुनर्वक्रं प्रारभ्य जपमाचरेत् ॥ इत्यपि ब्रह्मतर्के ॥ जपमालाभावे पर्वभिः जपमाह नारदः ॥ मध्यमानामिकामध्यं पर्व मेरुतया कृतं ॥ आरभ्यानामिकामूलं प्रदक्षिणतया जपेत् ॥ मध्यमामूलपर्यंतं गणयेद्दशपर्वसु इति ॥ शौनकः ॥ प्रातर्नाभ्यां करे[1] तत्र मध्यान्हे हृदि संस्थिते ॥ सायान्हे मुखमध्ये च गायत्रीजपमुत्तमं ॥ अथ वा ॥

१ करे कृत्वेत्यत्र पाठः ॥

कृत्वोत्तानौ करौ प्रातः सायं चाधोमुखौ करौ ॥ मध्ये स्कंधभु-
जाभ्यां तु जप एवमुदाहृतः ॥ भुजयोः स्कंधयोर्वा करौ मध्ये कृत्वा
जपः कार्य इत्यर्थः ॥ अंगुलीर्न वियुज्येत किंचिदाकुंचितौ करौ ॥
अंगुलीनां वियोगे तु छिद्रेषु स्रवते जपः ॥ अधोहस्तस्तु पैशाचो
मध्यहस्तस्तु राक्षसः ॥ बद्धहस्तस्तु गांधर्वो ऊर्ध्वहस्तस्तु दैवत
इति ॥ अधोहस्तः नाभेरधः कृतः पैशाचः पिशाचानां फलप्रद
इत्यर्थः ॥ एवमुत्तरत्रापि ॥ मनः प्रहर्[१]षणं शौचं मौनं मंत्रार्थ-
चिंतनं ॥ अव्यग्रत्वमनालस्यं जपसंपत्तिहेतवः ॥ होमं प्रतिग्रहं
दानं भोजनाचमने जपं ॥ बहिर्जानुर्न कुर्वीत सांगुष्ठस्तु समा-
चरेत् ॥ निष्ठीवे जृंभणे क्रोधे निद्रालस्ये क्षुते मदे ॥ पतितश्वां-

१ प्रकर्षणमित्यन्यत्र ॥

त्यजालोके दशस्वेतेषु चाचमेत् ॥ छेदने भेदने चैव पैतृकैरौ-
द्ररक्षसि ॥ आत्माभिमर्शने चैव निरस्याप उपस्पृशेत् ॥ अप-
वित्रकरो नग्नः शिरसि प्रावृतोऽपि वा ॥ प्रलपन्यो जपेद्यावत्ता-
वन्निष्फलतामियात् ॥ श्वशूद्रपतितादींश्च वराहं च रजस्वलां ॥
दृष्ट्वा तोयमुपस्पृश्य स्पृष्ट्वा स्नानं समाचरेत् ॥ स्नानभोजन-
योर्होमे जपे वै दंतधावने ॥ पुरीषमूत्रोत्सर्गे च सप्त मौनं विधी-
यते ॥ जपादौ क्रियमाणे तु यद्यागच्छेत्द्विजोत्तमः ॥ अभि-
वाद्य च तं विप्रं योगक्षेमं प्रकीर्तयेत् ॥ आचार्यं विष्णुभक्तं च
भगवन्मंदिरं जलं ॥ अश्वत्थमग्निमर्कं च पृष्ठीकृत्य जपेन्न तु ॥
छिन्नपादा तु गायत्री ब्रह्महत्याविनाशनी ॥ अच्छिन्नपादा गा-
यत्री ब्रह्महत्यां प्रयच्छति ॥ तस्मात्पादत्रयं छित्वा जपयज्ञं स-

माचरेत् ॥ संपुटैकषडोंकारगायत्री त्रिविधा मता ॥ तत्रैकप्रणवा
ग्राह्या गृहस्थैर्ब्रह्मचारिभिः ॥ गृहस्थो ब्रह्मचारी च प्रणवाद्या-
मिमां जपेत् ॥ अंते यः प्रणवं कुर्यान्नासौ वृद्धिमवाप्नुयात् ॥
संपुटां च षडोंकारां गायत्रीं च जपेद्यतिः ॥ एकोंकारां गायत्रीमाह
व्यासः ॥ पूर्वोंकारव्याहृतियुक् गायत्री चैकतारकेति ॥ एकतारका
एकोंकारयुक्तेत्यर्थः । संपुटामाह योगयाज्ञवल्क्यः ॥ ॐकारं पू-
र्वमुच्चार्य भूर्भुवःस्वस्तथैव च ॥ गायत्रीं प्रणवं चांते गायत्री
संपुटा मतेति ॥ मनुः षडोंकारमाह ॥ तिस्रो व्याहृतयः पूर्वं पृ-
थगोंकारसंयुताः ॥ पूर्वं पुनर्व्याहृतीनां मंत्रस्याद्यंतयोस्तथा ॥
एतया जप्तया नित्यं वाङ्मयं जपितं भवेदिति ॥ अस्यायं भावः ॥
प्रथमतः एकं ॐकारमुच्चार्य ततः पृथक्प्रणवसहितव्याहृतित्रय-

मुच्चार्य ततः सप्रणवगायत्रीं चोच्चार्यांतेऽपि प्रणवमुच्चारयेत् इति॥
॥ तथा चायं मंत्रोच्चारप्रकारः ॥ ॐ ॐभूः ॐभुवः ॐस्वः
ॐतत्सवितुर्वरेण्यं भर्गोदेवस्यधीमहि धियोयोनः प्रचोदयात् ॐ॥
कुशहस्तेन जपकरणे फलमाह हारीतः॥ कुशहस्तेन यज्जप्तं
दानं चैव कुशैः सह ॥ कुशहस्तस्तु यो भुङ्क्ते पुण्यं तस्य न ग-
ण्यते ॥ कुशमूले स्थितो ब्रह्मा कुशमध्ये जनार्दनः॥ कुशाग्रे शं-
करं विद्यात्त्रयो देवा व्यवस्थिता इति ॥ शिखाबंधनमाह ॥
स्मृत्वोंकारं तु गायत्रीं निबध्नीयाच्छिखां द्विजः॥ पुनराचम्य हृ-
दयं बाहू स्कंधौ च संस्पृशेदिति व्यासः॥ इदं शिखाबंधनं स-
र्वकर्मविषयं ॥ यज्ञोपवीतलक्षणमाह ॥ मनुः॥ कार्पाससमुपवीतं
स्याद्विप्रस्योर्ध्वं वृतं त्रिवृत् ॥ त्रिवृदूर्ध्वं वृतं कार्यं तंतुत्र-

यमधोवृतं ॥ त्रिवृतं चोपवीतं स्यात्तत्रैको ग्रंथिरिष्यते ॥ नाभे-
रूर्ध्वमनायुष्यमधो नाभेस्तपःक्षयः ॥ तस्मान्नाभिसमं कुर्या-
दुपवीतं विचक्षणः ॥ तत्रैको ग्रंथिः पवित्रग्रंथिः ॥ त्रिषु च्छिन्न-
मधःपातमनध्यायकृतं च यत् ॥ कृतं चाशुचिना यत्स्याद्भुक्त्वा
निर्मितमुत्सृजेत् ॥ सावित्र्या दशकृत्वोद्भिर्मंत्रितैस्तत्तु क्षालयेत् ॥
ॐकारः साग्निको गौश्च सोमः पितृप्रजापती ॥ वायुः सूर्यः सर्व-
देवास्तत्राहुर्दैवताः सदा ॥ देवेऽर्पितं ब्रह्मसूत्रं धारयेन्मंत्रतः शुचिः ॥
मंत्रस्तु ॥ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् ।
आयुष्यमग्र्यं प्रतिमुंच शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ स्तना-
दूर्ध्वमधोनाभेस्तन्नधार्यं कदाचनेति ॥ अपृष्ठवंशनाभ्यं तु याव-
द्वैविंदते कटिं ॥ यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि ॥

वस्त्राभावे तृतीयं तु गृहस्थो धारयेद्द्विजः ॥ चतुर्थमुत्तरीयार्थमायुष्कामो बहून्यपि ॥ गृहस्थस्य त्विदं प्रोक्तमेकं वै ब्रह्मचारिणः ॥ उपवीतमलंकारं स्त्रजं कनकमेव च ॥ उपानहौ च वासश्च धृतमन्यैर्न धारयेत् ॥ मेखलामजिनं दंडमुपवीतं कमंडलुं ॥ अप्सु प्रास्य विनष्टानि धार्याण्यन्यानि मंत्रत इति ॥

॥ अथ जपप्रकारः ॥ उपवेशनस्थानादधस्तात्परमपुरुषं आधारशक्तिं कूर्मं मंडूकं कालाग्निरुद्रं वज्रं अनंतं वराहं पृथिवीं नमेत्॥तत्र मंत्रः॥ॐ आधाररूपिण्यै शक्त्यै नमः॥ॐ कुं कूर्माय नमः॥ ॐ मं मंडूकाय नमः॥ ॐ कं कालाग्निरुद्राय नमः॥ ॐ वं वज्राय नमः॥ ॐ अं अनंताय नमः॥ॐ वं वराहाय नमः॥ॐ पं पृथिव्यै नमः॥ कुशादिबाह्यासने॥ पद्मादिशरीरासनेनोपविश्य प्राङ्मुखो वा

उदङ्मुखो वा अग्निगोविप्रसमीपे तन्मुखः मंत्रपूर्वकमुपविशेत्तत्र मंत्रः ॥ पृथिवीति मंत्रस्य । मेरुपृष्ठ ऋषिः । पृथिवी देवता । सुतलं छंदः । उपवेशने विनियोगः ॥ पृथिवि त्वया धृता लोका देवि त्वं विष्णुना धृता ॥ त्वं च धारय मां देवि पवित्रं कुरु चासनं ॥ ततः नारसिंहसुदर्शनात्मकं अष्टदलचक्रं ध्यात्वा ॥ चक्रमुद्रया तेन चक्रेण बध्नामि ॥ ऐंद्रादिदिक्षु ॥ नमश्चक्राय स्वाहा ॥ अस्त्राय फट् इति दिग्बंधः ॥ इति मंत्रेणाष्टदिक्षु स्थितान्भूतान् उच्चाटय दिग्बंधनं कुर्यात् ॥ ततः अपसर्पंतु ये भूता ये भूता भुवि संस्थिताः ॥ तेषामप्यविरोधेन ब्रह्मकर्म समारभेत् इति ॥ देवं प्रार्थ्य करशुद्ध्योः प्रागूर्ध्वं वा नमनं कुर्यात् ॥ तत्क्रमस्तंत्रसारे ॥ स्मृत्वा गुरुं पूर्वगुरुमादिमूलगुरुं तथा ॥ देवतां वासुदेवं च वि-

द्याभ्यासी तु सिद्धिभाक् ॥ अस्यार्थः ॥ गुरुं सद्विद्योपदेष्टारं सन्मंत्रोपदेष्टारं वा ॥ पूर्वगुरुं। गुरोर्गुरुं। आदिगुरुं। आनंदतीर्थनामकं मूलगुरुं ॥ मूलसप्तदेवतां तत्तद्विद्याप्रतिपाद्यां ॥ ततः वासुदेवं स्मरेदिति ॥ मूलगुरवश्चोक्ताः पंचरात्रे ॥ व्यासं च भारतीं वाणीं विधिं वायुं रमां तथा ॥ ततो नारायणं मूलगुरूनाहुर्विपश्चित इति ॥ एवं च द्वादश नमस्कारा: भवंति ॥ तत्क्रमः ॥ गुरुभ्यो नमः ॥१॥ परमगुरुभ्यो नमः ॥२॥ श्रीमदानंदतीर्थभगवत्पादाचार्येभ्यो नमः ॥ ३ ॥ वेदव्यासाय नमः ॥ ४ ॥ भारत्यै नमः ॥ ५ ॥ सरस्वत्यै नमः ॥ ६ ॥ वायवे नमः ॥ ७ ॥ ब्रह्मणे नमः ॥ ८ ॥ लक्ष्म्यै नमः ॥९॥ नारायणाय नमः ॥१०॥ हरये नमः ॥ ११ ॥ वासुदेवाय नमः ॥१२॥ ब्रह्महत्या० कुक्षौ

पापं विचिंतयेदिति ॥ पापपुरुषं ध्यात्वा तं च नाभिदेशमानीय। नाभौ षट्कोणमंडलमध्यस्थो नीलवर्णो वायुबीजवाच्यः शंखचक्रगदायुधः। प्रद्युम्नो भगवान् मच्छरीरस्थं पापपुरुषं वायुना शोषयेदित्युक्त्वा पूरकरीत्या वायुमापूर्य। ॐ यमिति वायुबीजं षड्वारं जप्त्वा तं शुष्कं भावयेत् ॥ ततस्तं हृदयदेशमानीय। हृदये त्रिकोणमंडलमध्यस्थो रक्तवर्णो अग्निस्थः शंखोब्जारिगदायुधः संकर्षणो भगवान् मच्छरीरस्थं पापपुरुषं अग्निना निर्दहेदित्युक्त्वा। रमिति वन्हिबीजं द्वादशवारं जप्त्वा तं दग्धं ध्यात्वा। तद्भस्म वामनासापुटेन रेचकप्रकारेण बहिर्निक्षिपेत् ॥ ततः शिरसि वर्तुलमंडलमध्यस्थः भगवाञ्श्वेतवर्णो वरुणस्थो वरुणबीजवाच्यः शंखचक्रपद्मगदायुधधरः श्रीवा-

सुदेवो भगवान् मच्छरीरमापादतलमस्तकं वरुणेन अमृतवृष्ट्या प्लावयेदित्युक्त्वा । वमिति चतुर्विंशतिवारं कुंभकरीत्या जपेत् ॥ अथ करशुद्धिः ॥ मणिबंधे० करशुद्धिरुदाहृता ॥ तत्र मंत्रस्तु यं रं वं इति बीजाक्षराण्येव तैरेव अस्त्राय फट् । इति दिग्बंधं वदेत् ॥ तत्त्वन्यासमातृकान्यासौ सर्वमंत्राणामुपकारकत्वादादौ कुर्यात् ॥ वैष्णवेषु च मंत्रेषु तत्त्वानां न्यासनं पुरा ॥ ततस्तु मातृकान्यासं कुर्यादन्यत्र चान्यथेति प्रमाणं ॥ अन्यत्र देवपूजादौ प्रतिमायां । अन्यथा मातृकान्यासं पूर्वं कृत्वा पश्चात्तत्त्वन्यासः॥ तत्क्रमः ॥ मूलेन प्राणानायम्य ॥ ॐभूः अग्न्यात्मने अनिरुद्धाय हृदयाय नमः ॥ ॐभुवः वाय्वात्मने प्रद्युम्नाय शिरसे स्वाहा॥ ॐस्वः सूर्यात्मने संकर्षणाय शिखायै वषट् ॥ ॐभूर्भुवः स्वः

प्राजापत्यात्मने श्रीवासुदेवाय कवचाय हुं ॥ ॐसत्यात्मने नारा-
यणाय अस्त्राय फडिति दिग्बंधः ॥ एतेषां तत्वमंत्राणां अंतर्यामि-
ऋषिः मूर्ध्नि ॥ देवी गायत्री छंदः मुखे । प्रधानादिरूपी नारा-
यणो देवतेति हृदये न्यस्य ॥ प्रधानोपमवर्णानि द्विभुजान्यप्य-
शेषतः ॥ कृतांजलिपुटान्येव प्रधानं तं हरिं प्रति ॥ श्रीविष्णुप्रे-
रणया श्रीविष्णुप्रीत्यर्थं तत्वन्यासं करिष्ये ॥ तत्र द्वादशमूर्तीः
मालाकारेण हृदये ध्यात्वा न्यसेत् ॥ एवमग्रेऽपि न्यासो नाम
तत्रतत्र ध्यानमेव ॥ अत्र सर्वत्र नमः शब्दस्य आत्मने इत्यनेन
तत्त्वाभिमानिदेवतांतर्यामित्वादेकेनान्वयः ॥ तत्रात्मपदं तत्त्वा-
भिमानिदेवतावाचि ॥ तत्तदात्मपदं तदंतर्यामिविष्णुवाचि ॥
परायेति तु तस्य विशेषणं ॥ अतः परशब्देन एकवचनमेव प्र-

योक्तव्यं ॥ अभिमानिदेवतासु तत्तदनुसारेण एकवचनादिकं ॥ ॐपराय शक्त्यात्मने श्रीलक्ष्मीनारायणाय नमः ॥ ॐपराय प्रतिष्ठात्मने श्रीलक्ष्मीनारायणाय नमः ॥ २ ॥ ॐपराय संविदात्मने श्री० ॥ ३ ॥ ॐपराय स्फूर्त्यात्मने श्री० ४ ॐपराय प्रकृत्यात्मने[1] श्री० ॥ ५ ॥ ॐपराय कालात्मने श्री० ॥ ६ ॥ ॐ पराय विद्यात्मने श्री० ॥ ७ ॥ ॐपराय मत्यात्मने श्री० ॥८॥ ॐपराय नियत्यात्मने श्री० ॥ ९ ॥ ॐपराय मायात्मने श्री० ॥ १० ॥ ॐपराय कालात्मने श्री० ॥ ११ ॥ ॐपराय पुरुषात्मने श्री० ॥ १२ ॥ वायुपुराणे लक्ष्मीनारायणौ कथितौ ॥ अन्यत्र तु ब्रह्मवायू ॥ तद्रीत्या पराय पुरुषात्मने ब्रह्मवायुभ्यां

१ प्रवृत्त्यात्मने इति प्रायःपुस्तकेषु ॥

नमः इति न्यासोऽपि ॥ दक्षिणबाहौ ॥ ॐपराय अव्यक्तात्मने ब्रह्माणीभारतीभ्यां नमः॥ वामबाहौ ॐपराय ॥ महदात्मने ब्रह्म-वायुभ्यां नमः ॥ दक्षिणपादे ॥ ॐपराय अहंकारात्मने गरु-डशेषरुद्रेभ्यो० ॥ वामपादे ॥ ॐपराय मनआत्मने स्कंदेंद्राभ्यां नमः ॥ दक्षिणहस्तांगुष्ठादिपंचांगुलिषु ॥ ॐपराय श्रोत्रात्मने दिग्देवताभ्यो नमः ॥ ॐपराय त्वगात्मने प्राणाय नमः॥ ॐ पराय चक्षुरात्मने सूर्याय० ॥ ॐपराय जिव्हात्मने वरुणाय न० ॥ ॐपराय घ्राणात्मने अश्विभ्यां नमः इति ॥ वामहस्त-ज्येष्ठांगुष्ठादिपंचांगुलिषु ॥ ॐपराय वागात्मने वन्हये० ॥ ॐ पराय पाण्यात्मने दक्षाय० ॥ ॐपराय पादात्मने जयंताय०॥ ॐपराय पाय्वात्मने मित्राय नमः ॥ ॐपराय उपस्थात्मने

मनवे० ॥ ततः दक्षिणपादांगुष्ठादिपंचांगुलिषु ॥ ॐपराय श-
ब्दात्मने बृहस्पतिप्राणाभ्यां नमः ॥ ॐपराय स्पर्शात्मने अपानाय
नमः ॥ ॐपराय रूपात्मने व्यानाय० ॥ ॐपराय रसात्मने
उदानाय नमः ॥ ॐपराय गंधात्मने समानाय नमः ॥ ततः
वामपादांगुष्ठाद्यंगुलिषु ॥ ॐपराय आकाशात्मने महागणपत-
ये० ॥ ॐपराय वाय्वात्मने प्रवहवायवे नमः ॥ ॐपराय तेज-
आत्मने अग्नये नमः ॥ ॐपराय अबात्मने वरुणाय० ॥ ॐप-
राय पृथिव्यात्मने शनैश्चरधराभ्यां नमः ॥ अथ मातृकान्यासः ॥
यद्यप्यकाराद्यक्षराणामेकमात्रकत्वात् ॐअंनमः ॐआंनमः । इ-
त्येव न्यासात्प्राप्तः ॥ तथाऽपि शिष्टाचारात् देवतासहितन्यासस्य
महाफलत्वात् स एव लिख्यते ॥ तत्वन्यासोक्तप्रकारेण प्राणा-

यामन्यासौ कृत्वा एतेषां मातृकामंत्राणां अंतर्यामिऋषिः शि-
रसि । देवी गायत्रीछंदः मुखे । अजादिरूपी नारायणो देवता
हृदये न्यस्य । उद्यद्भास्वत्समाभासश्चिदानंदैकदेहवान् ॥ चक्रशं-
खगदापद्मधरो ध्येयोऽहमीश्वरः ॥ लक्ष्मीधराभ्यामाश्लिष्टः स्व-
मूर्तिगणमध्यगः ॥ ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि ॥ से-
व्यमानोऽधिकं भक्त्या नित्यनिःशेषशक्तिमान् ॥ तादृग्रूपाश्च पं-
चाशज्ज्ञानमुद्रा भयोद्यताः ॥ टंकी दंडी च धन्वी च तत्तद्युक्तास्तु वा-
मतः ॥ इति ध्यायेत् ॥ एवं जपेऽपि बोध्यं ॥ पंचाशदित्यत्र एकपं-
चाशदिति ग्राह्यं ॥ मतांतरेणाक्षर इतिवर्णपृथक्त्कात् ॥ ॐ अं अ-
जाय नमः शिरसि ॥ ॐ आं आनंदाय नमः मुखे अभितः ॥दक्षने-
त्रे ॥ ॐ इं इंद्राय नमः ॥ वामनेत्रे ॐ ईं ईशानाय नमः दक्षकर्णे ॥

ॐ उं उग्राय नमः वामकर्णे ॥ ॐ ऊं ऊर्जाय नमः दक्षनासापुटे ॥ ॐ ऋं ऋतंभराय० वामनासापुटे ॥ ॐ ॠं ॠघाय नमः दक्षगंडे ॥ ॐ ऌं ऌशाय नमः वामगंडे ॥ ॐ ॡं ॡशाय नमः ऊर्ध्वोष्ठे ॥ ॐ एं एकात्मने० अधरोष्ठे ॥ ॐ ऐं ऐरावताय नमः ऊर्ध्वदंतपङ्क्तौ ॥ ॐ ओं ओजोभृते नमः अधोदंतपङ्क्तौ ॥ ॐ औं औरसाय नमः मुखांतःस्थमूर्ध्नि स्थाने ॥ ॐ अं अंताय नमः वाचि ॥ ॐ अः अर्धगर्भाय नमः दक्षबाहुसंधिष्वग्रे च ॥ ॐ कं कपिलाय नमः ॥ ॐ खं खपतयेनमः ॥ ॐ गं गरुडाय नमः ॥ ॐ घं घर्माय नमः ॥ ॐ ङं ङसाराय नमः ॥ ततः वामबाहुसंधिष्वग्रे च ॥ ॐ चं चार्वंगाय० ॥ ॐ छं छंदोगम्याय नमः ॥ ॐ जं जनार्दनाय नमः ॥ ॐ झं झटितारये नमः ॐ ञं ञज्ञाय नमः ॥

दक्षपादसंधिष्वग्रे च ॥ ॐ टं टंकिने नमः ॥ ॐ ठं ठकलायन-
मः ॥ ॐ डं डरकाय नमः ॥ ॐ ढं ढरिणेनमः ॥ ॐ णं णात्म-
ने नमः ॥ ततः वामपादसंधिष्वग्रे च ॥ ॐ तं ताराय नमः ॥ ॐ
थं थवायं[1] नमः ॥ ॐ दं दंडिने नमः ॥ ॐ धं धन्विने० ॥ ॐ नं
नम्याय० ॥ दक्षिणपार्श्वे ॥ ॐ पं पराय० ॥ वामपार्श्वे ॐ फं फलि-
ने० ॥ पृष्ठे ॐ बं बलिने० ॥ गुह्ये ॐ भं भगाय० ॥ गुदे[2] ॐ
मं मनवे० ॥ हृदि ॐ यं यज्ञाय० ॥ त्वचि ॐ रं रामाय० ॥
चर्मणि ॐ लं लक्ष्मीपतये० ॥ मांसे ॐ वं वराहाय० ॥ रुधिरे
ॐ शं शांतसंविदे नमः ॥ मेदसि ॐ षं षड्गुणाय० ॥ मज्जायां
ॐ सं संसारात्मने० ॥ अस्थिषु ॐ हं हंसाय० ॥ प्राणे ॐ ळं

---

१ थं थभायनम इसन्यत्र ॥ थं थपायनमइसष्वेकस्मिन्प्रतिपुस्तके ॥ २ नाभाविसन्येषु ॥

लालुकाय० ॥ जीवे ॐ क्षं नृसिंहाय० ॥ इति मातृकामंत्राणां। जपेऽप्येवं पठेत् ॥ ततः विश्वामित्रगायत्रीमंत्रस्य प्राणायामः कार्यः प्राणायाममंत्रस्तु । दशप्रणवसप्तव्याहृतिशिरोयुक्तगायत्री ॥ गुरुनमस्कारे । एकादशस्थाने सवितृनामकनारायणाय नम इति वाच्यं । तत्सवितुः हृदयाय नमः ॥ इति षडंगन्यासं कृत्वा ॥ ध्येयः सदेत्युक्तप्रकारेण सवितुरंतर्गतनारायणं ध्यात्वा विश्वामित्रगायत्रीं जपेत् ॥ जपकाले मौनेन ॐकारव्याहृतिगायत्र्यर्थमनुसंदध्यात् ॥ तत्राऽपि विशेषः ॥ तत्सवितुरित्यत्र तच्छब्दस्य अभ्यंतर्गतपरशुरामार्थकत्वं ॥ पादत्रयस्य अनिरुद्धप्रद्युम्नसंकर्षणार्थकत्वं जानीयात् ॥ जपसंख्या तु श्रीमदाचार्यैरुक्ता ॥ अर्कमंडलगं विष्णुं ध्यात्वैव त्रिपदीं जपेत् ॥ सहस्र

परमां देवीं शतमध्यां दशावरां ॥ आसूर्यदर्शनात्तिष्ठेत्ततस्तूप-
विशेत वेति ॥ अत्र जपात्पूर्वं ऋषिछंदोदेवतास्मरणं च कार्यं ॥
तत्र प्रणवस्य परब्रह्म ऋषिः परमात्मा देवता देवी गायत्री छंदः
व्याहृतीनां प्रत्येकं तिसृणां क्रमात् ॥ विश्वामित्रजमदग्निभर-
द्वाजा ऋषयः ॥ अग्निवायुसूर्यांतर्गतानिरुद्धप्रद्युम्नसंकर्षणा दे-
वताः गायत्र्युष्णिगनुष्टभः छंदांसि ॥ अस्य श्रीगायत्रीमंत्रस्य
विश्वामित्र ऋषिः । सवितृनामक श्रीलक्ष्मीनारायणो देवता । गा-
यत्रीछंदः ॥ इति ऋष्यादिस्मरणानंतरं ध्यानश्लोकाद्युक्तप्रकारं
प्रणवाद्यर्थविशेषज्ञानपूर्वकं गायत्रीं च यथाशक्ति जपित्वा त्रि-
गुणमष्टाक्षरं तंत्रसारोक्तप्रकारेण अष्टाक्षरन्यासध्यानपूर्वकं ज-
पेत् ॥ अत्र अष्टमहामंत्रजपक्रमस्तु ॥ नारायणाष्टाक्षरव्याहृती-

द्वादशाक्षरं ॥ गायत्री ब्रह्मऋषिका मातृका पुरुषसूक्तकं ॥ षडक्षरं विष्णुमंत्रमेतान्मंत्रान्जपेत्क्रमात् ॥ उपदेशक्रमेणैव अन्यान्मंत्रान्जपेत्सुधीः ॥ ततः संध्योपस्थानं कुर्यात् ॥ तदुक्तमाचार्यैः ॥ गायत्र्यास्त्रिगुणं विष्णुं ध्यायन्नष्टाक्षरं जपेत् ॥ प्रणम्य देवान्विप्रांश्च गुरूंश्च हरिपार्षदान् ॥ उपस्थानप्रकारमाह याज्ञवल्क्यः ॥ प्रातरुत्तानहस्ताभ्यां सायं संमुखहस्ततः ॥ मध्यान्हे तूर्ध्वबाहुभ्यामुपतिष्ठेद्दिवाकरमिति ॥ प्रणम्य देवानित्यस्यायमर्थः ॥ हरिपार्षदान् विष्णुभक्तान् इति ॥ देवानित्यादि त्रयं विशेषणं ॥ अवैष्णवदेवादिव्यावृत्तिः ॥ दीनत्वाद्देवनामानस्ते ब्रह्मादिसनामका इति गीतातात्पर्ये दैत्यानां देवशब्दत्वस्य ब्रह्मादिशब्दवाच्यत्वोक्तेः ॥ तत्रायं प्रकारः ॥ नारायणाष्टाक्षर-

मंत्रस्तु आद्यंतप्रणवसहितः। ॐ ॐ नमो नारायणाय ॐ इति॥ गुरुनमस्कारे एकादश स्थाने नारायणाय नम इति प्राणायामः ॥ ३६ ॥ २४ ॥ १२ ॥ इति पक्षत्रयं शक्ताशक्तपक्षे ॥ अथ पंचांगन्यासः ॥ ॐ क्रुद्धोल्काय हृदयाय नमः ॥ ॐ महोल्काय शिरसे स्वाहा ॥ ॐ वीरोल्काय शिखायै वषट् ॥ ॐ द्युल्काय नमः कवचाय हुं ॥ ॐ सहस्रोल्काय नमः अस्त्रायफट् इति दिग्बंधः ॥ एतानि पंच विष्णुनामानि ॥ अथाष्टांगन्यासः ॥ ॐ ॐ विश्वाय नमः शिरसि ॥ ॐ नं तैजसाय नमः नेत्रयोः ॥ ॐ मों प्राज्ञाय नमः नासायां ॥ ॐ नां तुरीयाय नमः वाचि ॥ ॐ रां आत्मने नमः हृदि ॥ ॐ यं अंतरात्मने नमः नाभौ ॥ ॐ णां परमात्मने नमः जान्वोः ॥ ॐ यं ज्ञानात्मने नमः पादयोः ॥ ततः

कृद्धोल्कादि पंचमंत्रैर्द्विरावृत्त्या उभयहस्तांगुलीषु न्यस्य ॥ उद्यद्भास्वत्समाभासश्चिदानंदैकदेहवान् ॥ चक्रशंखगदापद्मधरो ध्येयोऽहमीश्वरः ॥ लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः ॥ ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि ॥ सेव्यमानोऽधिकं भक्त्या नित्यनिःशेषशक्तिमान् ॥ मूर्तयोऽष्टावपि ध्येयाश्चक्रशंखवराभयैः ॥ युक्ताः प्रदीपवर्णाश्च सर्वाभरणभूषिताः ॥ चक्रशंखवराभयहस्तान्येतानि सर्वशः ॥ मूलरूपसवर्णानि कृष्णवर्णाशिखोच्यत इति ॥ नारायणं विश्वादि कृद्धोल्कादींश्च ध्यात्वा ॥ अस्य श्रीनारायणाष्टाक्षरमंत्रस्य अंतर्यामि ऋषिः परमात्मा श्रीलक्ष्मीनारायणो देवता देवीगायत्रीछंदः ॥ श्रीलक्ष्मीनारायणप्रेरणया श्रीलक्ष्मीनारायणप्रीत्यर्थं श्रीमन्नारायणाष्टाक्षरमंत्रजपं

करिष्ये इति संकल्प्य ॥ ध्यात्वा मंत्रं जप्त्वा पुनः पूर्ववत्प्राणायाम-
न्यासौ कृत्वा ध्यानश्लोकं पठित्वा समाप्य। यस्य स्मृत्या चेति हरौ
समर्पयेत् ॥ मंत्रतर्पणं तु जले श्रीकारं लिखित्वा तत्र विष्णु-
मावाह्य संपूज्य मंत्रमुच्चार्य नारायणं तर्पयामीत्युक्त्वा तर्पणसं-
ख्या ॥ १०८ ॥ ५४ ॥२४॥१०॥ नात्र जपदशांशेन तर्पणं तस्य
पुरश्चरणविषयत्वात् ॥ मंत्रसंध्या तु मंत्रार्थानुसंधानाभावे कार्या ॥
मंत्राऽनुसंधाने तु तत्फलस्यापि प्राप्तेः ॥ तत्प्रकारस्तु अ-
स्मदाचार्यैः स्मृतिसंग्रहे उक्तः ॥ तत्रैव द्रष्टव्यः ॥ बहुशिष्टाचा-
राभावान्नास्माभिरत्रोक्तः ॥ यद्यपि ब्रह्मचर्यादीनां सृष्ट्यंत्यादि-
वर्णन्यासः चतुर्थाध्याये कथितः ॥ तथापि तत्रैव एतेषु सर्वमं-
त्रेषु इति एतच्छब्दग्रहणेन चतुर्थाध्यायोक्तमंत्रग्रहणात् प्रथमा-

ध्यायाष्टमहामंत्रेषु सृष्ट्यंतादिविधानाभावात् । सृष्ट्यंत्यादिन्यासेन कथितः चतुर्थाध्यायोक्तमंत्रेष्वपि सृष्टानां वर्णन्यासं करणं तु कामनाभावेन ज्ञेयं ॥ सृष्टिन्यासो वर्णिनां तु संहतिर्मोक्षमिच्छतां ॥ स्थितिन्यासो गृहस्थानां त्रयं काम्यानुसारतः ॥ तथापि तस्य संन्यासिविषयत्वं ज्ञापयितुं शिष्टैः सृष्टिन्यास एव क्रियते ॥ अत एव नारायणवर्म स्तोत्रे ॥ पादयोर्जानुनोरूर्वोरिति ॥ संहारन्यासं पूर्वमुक्त्वा विपर्ययमथाऽपि वेति सृष्टिन्यासः पश्चात्कथितः ॥ यद्यपि अष्टमहामंत्रेषु प्रणवस्य प्रथममंत्रत्वात् तन्न्यासादिकं प्रथमं वक्तव्यं ॥ तथापि जपाधिकारी यतिरस्य सूचित इति मध्वविजयोक्तेः । तथा शिष्टाचाराद्यभावाच्च तस्य गृहस्थाद्यजप्यत्वात् प्रणवन्यासादिकमंत्रो न कथितः ॥ व्यासा-

चार्यैस्तु शुद्धगृहस्थस्याधिकारमाश्रित्य अष्टमहामंत्रपद्धतौ प्र-
णवन्यासध्यानादिकं कथितं ॥ अथ व्याहृतिमंत्रः ॥ ॐभूः ॐ
भुवः ॐस्वः ॐभूर्भुवःस्वः इति मंत्रः ॥ नमने एकादशस्थाने हरये
नम इति विशेषः ॥ मंत्रेण प्राणायामः ॥ ३६ ॥ २४ ॥ १२ ॥
न्यासः ॥ ॐ नारायणाय नमः हृदयाय नमः ॥ इति हृदये ॥
ॐभूः वासुदेवाय नमः शिरसे स्वाहा इति शिरसि ॥ ॐभुवः सं-
कर्षणाय शिखायै वषट् ॥ ॐस्वः प्रद्युम्नाय कवचाय हुं ॥ ॐभू-
र्भुवस्वः अनिरुद्धाय अस्त्राय फट् इति दिग्बंधः ॥ ॐभूः वासुदे-
वाय नम इति शिरसि ॥ ॐभूवः संकार्षणाय नम इति हृदये ॥
ॐ स्वः प्रद्युम्नाय नमः इति नाभौ ॥ ॐभूर्भुवःस्वः अनिरुद्धाय नम
इति व्यापकाकारेण हस्ताभ्यां सर्वांगे न्यस्य ॥ अस्य श्रीव्या-

हतिमंत्रस्य ब्रह्मा ऋषिः शिरसि गायत्री छंदः मुखे हरिर्देवता हृदये न्यस्य ॥ उद्यदादित्यवर्णश्च ज्ञानमुद्राभयोद्यतः ॥ लक्ष्मीधराभ्यामाश्लिष्ट इत्यादिना हरिं ध्यात्वा । वासुदेवादिकाः शुक्लरक्तपीतसीतोज्वलाः ॥ शंखचक्रगदाब्जेतः प्रथमो मुसली हली॥ सचक्रशंखस्त्वपरस्तृतीयः शार्ङ्गहस्तवान् चक्रशंखस्तुरीयस्तु चक्रशंखासिचर्मवान् ॥ इति वासुदेवादि चतुरश्च ध्यात्वा जप्त्वा जपोपसंहारः पूर्ववत्कार्यः॥ तर्पणं तु ॐ भूः अनिरुद्धं तर्पयामि॥ ॐ भुवः प्रद्युम्नं तर्पयामि॥ ॐ स्वः संकर्षणं तर्पयामि ॥ ॐ भूर्भुवःस्वः वासुदेवं तर्पयामि ॥ १०८।२७ अथ वासुदेवमंत्रः ॥ ॐ नमो भगवते वासुदेवायेति मंत्रः॥ नमने एकादशस्थाने वासुदेवाय

१ हरिः इसन्यत्र पुस्तके ॥

नम इति विशेषमंत्रेण प्राणायामः ३६।२४।१२॥ ॐ अनिरुद्धाय हृदयाय नम इति हृदये ॥ ॐ नमो प्रद्युम्नाय शिरसे स्वाहा ॥ ॐ भगवते संकर्षणाय शिखायै वषट् ॥ ॐ वासुदेवाय कवचाय हुं ॥ ॐ नमो भगवते वासुदेवाय नारायणाय अस्त्रायफट् इति दिग्बंधः॥ ॐ केशवाय नमः शिरसि॥ ॐ नं नारायणाय नमः चक्षुषोः ॥ ॐ मों माधवाय नमः नासिकायां ॥ ॐ भं गोविंदाय नमः कवचाय हुं ॥ ॐ गं विष्णवे नमः हृदि ॥ ॐ वं मधुसूदनाय नमः नाभौ ॥ ॐ तें त्रिविक्रमाय नमः जान्वोः ॐ वां वामनाय नमः पादयोः ॥ ॐ सुं श्रीधराय नमः दक्षबाहौ ॥ ॐ दे हृषीकेशाय नमः वाम-बाहौ ॥ ॐ वां पद्मनाभाय नमः दक्षोरा॥ ॐ यं दामोदराय नमः वामोरौ न्यस्य ॥ अस्य श्रीवासुदेवद्वादशाक्षरमंत्रस्य अंतर्यामि

ऋषिः जगती छंदः वासुदेवो देवता ॥ अच्छवर्णोभयवरकरो ध्ये-
योऽमितद्युतिः ॥ लक्ष्मीधराभ्यामाश्लिष्ट इत्यादि मंत्रदेवतां ध्या-
त्वा । वासुदेवादिकाः शुक्ला इत्यादि पूर्वोक्तपरदेवतां ध्यात्वा
देवताः ध्यायेत् ॥ चक्रशंखगदाब्जेतः केशवः सूर्यसप्रभः ॥ ना-
रायणः साब्जगदाचक्रशंखो रविप्रभः ॥ माधवश्चक्रशंखाब्ज-
गदेतो रविसुप्रभः ॥ गदाब्जशंखचक्रेतो गोविंदो भास्करद्युतिः॥
कंजकंबूचक्रगदायुतो विष्णू रविप्रभः । सशंखाब्जगदाचक्रः सू-
र्याभो मधुसूदनः ॥ त्रिविक्रमो गदाचक्रशंखपद्मो रविप्रभः ॥
श्रीधरोऽरिगदाकंबुपद्मेतोऽर्कसमद्युतिः॥ सारिपद्मः शंखगदो हृषी-
केशोऽर्कसप्रभः ॥ पद्मनाभः साब्जचक्र गदाशंखोऽर्कसंनिभः॥
दामोदरः शंखगदाचक्रपद्मोऽर्कसप्रभः॥ इत्यक्षरदेवान्ध्यात्वा ज-

त्वा । जपोपसंहारः पूर्ववत् ॥ तर्पणं तु मंत्रमुच्चार्य वासुदेवं तर्पयामीति विशेषः ॥ अथ ब्रह्मगायत्रीमंत्रः ॥ चतुर्विंशतिवर्णानां जपः ॥ प्राणायामस्तु ॥ दशप्रणवसप्तव्याहृतिशिरोयुक्तगायत्र्याकार्यः ॥ नमने एकादशस्थाने । ॐसवितृनामक नारायणाय नम इति विशेषः ॥ प्राणायामान् ॥ १२ ॥ २४॥३६ ॥ ॐ नारायणाय हृदयाय नमः हृदये ॥ ॐ भूः वासुदेवाय शिरसेस्वाहा ॥ ॐ भुवः संकर्षणाय शिखायै वषट् ॥ ॐ स्वः प्रद्युम्नाय कवचाय हुं ॥ भूर्भुवःस्वः अनिरुद्धाय अस्त्रायफट् इति दिग्बंधः ॥ दक्षबाहुसंधिचतुष्टयेऽग्रे च ॥ तं केशवाय नमः ॥ त्सं नारायणाय नमः ॥ विं माधवाय नमः ॥ तुं गोविंदाय नमः ॥ विं विष्णवे नमः ॥ ततः वामबाहुसंधिचतुष्टयेऽग्रे च ॥ रें मधुसूदनाय नमः । णें त्रिविक्रमाय नमः ॥

यं वामनाय नमः ॥ भं श्रीधराय नमः॥ गौं हृषीकेशाय० ॥ ततः दक्षपादसंध्यग्रेषु ॥ दें पद्मनाभाय नमः। वं दामोदराय नमः। स्यं संकर्षणाय नमः ॥ धीं वासुदेवाय नमः। मं प्रद्युम्नाय० ॥ वामपादसंध्यग्रेषु॥ हिं अनिरुद्धाय न० ॥ धिं पुरुषोत्तमाय० ॥ यों अधोक्षजाय न० ॥ यों नारसिंहाय० ॥ नं अच्युताय० ॥ प्रं जनार्दनाय नमः शिरसि ॥ चों उपेंद्राय नमः मुखे ॥ दं हरये हृदि॥ यात् कृष्णाय न० नाभौ ॥ न्यस्य ॥ अस्य श्रीगायत्रीमंत्रस्य प्रजापतिर्ऋषिः शिरसि ॥ गायत्री छंदः मुखे॥ सविता देवतेति हृदये न्यस्य ॥ प्रोद्यदादित्यवर्णश्च सूर्यमंडलमध्यग इति ध्यात्वा। शंखचक्रगदाब्जेतः इत्यादिना केशवादिदामोदरांतं ध्यात्वा। संकर्षणादिकृष्णांतं च ध्यायेत् ॥ शंखाब्जारिगदीसूर्यप्रभः सं-

कर्षणो विभुः ॥ शंखचक्री पद्मगदी वासुदेवो रविद्युतिः ॥ प्र-
द्युम्नो रविभः शंखगदाब्जारिधरो विभुः ॥ अनिरुद्धो गदाशं-
खपद्मचक्री रविप्रभः ॥ पद्मशंखगदाचक्री सूर्याभः पुरु-
षोत्तमः ॥ रविप्रभो गदाशंखचक्राब्जेतो ह्यधोक्षजः ॥ नृसिंहः
सूर्यभः पद्मगदाशंखोऽरिसंयुतः ॥ सूर्याभोऽच्युतनाभाब्जशंखच-
क्रगदायुतः ॥ जनार्दनश्चक्रशंखगदाब्जेतो रविद्युतिः ॥ उद्य-
दर्कनिभोपेंद्रो गदाचक्राब्जशंखयुक् ॥ सारिपद्मगदाशंखो हरिः
प्रोद्यद्रविप्रभः ॥ उद्यदर्कनिभः कृष्णो गदापद्मारिशंखभृत् ॥
इत्यक्षरमूर्तीः ॥ उद्यद्भास्वेति नारायणं । वासुदेव इत्यादिना
वासुदेवादिकांश्च ध्यात्वा । आद्यंतप्रणवसहितचतुर्विंशत्यक्षर-
गायत्रीमंत्रजपं यथाशक्ति कृत्वा पूर्ववत्प्राणायामादिपूर्वक-

जपोपसंहारः कार्यः ॥ तर्पणं तु मंत्रमुक्त्वा सवितृनामकनारायणं तर्पयामि इति विशेषः ॥ अथ मातृकामंत्रः ॥ अत्र नमने एकादशस्थाने अजादिभ्यो नम इति विशेषः ॥ प्राणायामस्तु प्रणवेन अष्टाक्षरेण सदशप्रणवगायत्र्या कार्यः ॥ ॐभूरित्यादि मातृकान्यासोक्तप्रकारेण पंचांगन्यासादिध्यानांतं कृत्वा अजादिदेवतासहितमातृकाणां जपं कुर्यात् ॥ त्रिचतुःषड्दशावर्तिरिति वचनोक्तप्रकारेषु मध्ये यथाशक्ति मंत्रावृत्तिजपं कुर्यात् ॥ प्राणायामाद्युपसंहारस्तु पूर्ववत्॥ ॐअजाय नमः अजं तर्पयामीति विशेषः ॥ अथ पुरुषसूक्तमंत्रः ॥ नमने एकादशस्थाने पुरुषाय नमः ॥ प्राणायामः ॥ प्रणवादिभिः मातृकावत् ॥ ॐभूः अग्न्यात्मने अनिरुद्धाय नम इति । आदिपंचांग

न्यासोऽपि तथा ॥ अस्य श्रीपुरुषसूक्तस्य अंतर्यामि ऋषिः । पंचदशार्चोऽनुष्टुभः ॥ अंत्यस्त्रिष्टुप्छंद इति ऋग्वेदिनां ॥ यजुर्वेदिनां तु पंचदशानुष्टुभः शेषस्त्रिष्टुप् इति मुखे ॥ पुरुषनामक नारायणो देवता इति हृदये न्यस्य ॥ उद्यद्भास्वत्समाभासश्चिदानंदैकदेहवान् ॥ इत्यारभ्य नित्यनिःशेषशक्तिमानित्यंतेन ध्यात्वा ॥ वासुदेवादिकान्ध्यात्वा पुरुषसूक्तं त्रिचतुःषटदशावृत्ति जप्त्वा । जपोपसंहारः पूर्ववत् ॥ तर्पणं तु एकामृचमुक्त्वा पुरुषं तर्पयामीति विशेषः ॥ पुरुषसूक्तार्थस्तु सामान्यतः ॥ पुरुषपदार्थः पूर्णषड्गुणत्वं सृष्ट्यादिकर्तृत्वं ॥ विशेषार्थस्तु द्वितीयस्कंधभागवतोक्तरीत्या ज्ञातव्यः ॥ अथ विष्णुमंत्रः ॥ नमने एकादशस्थाने विषणवे नम इति ॥ अनेनैवप्राणायामः अथ षडंग-

न्यासः ॥ विं विश्वाय हृदयाय० ॥ षं तैजसाय शिरसे० ॥ णं प्राज्ञाय शिखायै वषट् ॥ वें तुर्याय कवचाय हुं ॥ नं आत्मने नेत्राभ्यां वौषट् ॥ मः अंतरात्मने अस्त्रायफट् इति दिग्बंधः ॥ विं विश्वायनमः शिरसि ॥ षं तैजसाय० नासायां ॥ णं प्राज्ञाय नम इति हृदि ॥ वें तुर्याय नम इति नाभौ ॥ नं अंतरात्मने नम इति जान्वोः ॥ मः अंतरात्मने नम इति पादयोः अस्य श्रीविष्णुषडक्षरमंत्रस्य अंतर्यामि ऋषिः दैवीगायत्री छंदः विष्णुर्देवता ॥ मेघश्यामसमाभस इत्यादिनित्यनिःशेषशक्तिमानित्यंतं विष्णुं ध्यात्वा मूर्तयः षडेव ध्येयाः ॥ चक्रशंखवराभयैर्युक्ताः प्रदीपवर्णाश्च सर्वाभरणभूषिताः इत्यक्षरदेवान् ध्यात्वा जपोपसंहारः पूर्ववत्कार्यः ॥ तर्पणं तु मंत्रमुक्त्वा विष्णुं

तर्पयामीति विशेषः ॥ विष्णुशब्दार्थस्तु विशिष्टप्राणबलस्वरूप-
त्वम् ॥ इति महामंत्राः ॥ उपमंत्रास्तु कृष्णव्यासहंसादिमंत्राः ॥ त-
त्र कृष्णमंत्रः ॥ ॐ क्लीं कृष्णाय नमः ॥ षडंगन्यासस्तु ॥ पूर्णज्ञा-
नात्मने हृदयाय नमः ॥ पूर्णऐश्वर्यात्मने शिरसे स्वाहा ॥ पूर्णप्र-
भात्मने शिखायै वषट् ॥ पूर्णानंदात्मने कवचाय हुं ॥ पूर्णतेज-
आत्मने नेत्राभ्यां वौषट् ॥ पूर्णशक्त्यात्मने अस्त्राय फट् इति दि-
ग्बंधः ॥ अस्य श्रीकृष्णषडक्षरमंत्रस्य ब्रह्मा ऋषिः ॥ गायत्री
छंदः श्रीकृष्णो देवता । ध्यानं ॥ ध्यायेद्धरिम्मणिनिभं जगदेक-
वंद्यं सौंदर्यसारमरिशंखवराभयानि ॥ दोर्भिर्दधानमजितं सर-
सं च भैष्मीसत्यासमेतमखिलप्रदमिंदिरेशं ॥ जपप्राणायामो-
पसंहारादि पूर्ववत् ॥ एवमन्येऽपि मंत्रास्तंत्रसारोक्तप्रकारेण

ज्ञातव्याः ॥ एवं मंत्रान्जप्त्वा पुनः संपुटाकारेण स्वस्मिन्मातृ-
कान्यासतत्त्वन्यासौ कृत्वा संध्योपस्थानं कुर्यात् ॥ तदुक्तं श्री-
मदाचार्यैः ॥ गायत्र्यास्त्रिगुणं विष्णुं ध्यायन्नष्टाक्षरं जपेत् ॥
प्रणम्य देवान्विप्रांश्च गुरूंश्च हरिपार्षदान् ॥ इति ॥ उपस्थान-
प्रकारमाह याज्ञवल्क्यः ॥ प्रातरुत्तानहस्ताभ्यां सायं सन्मुख-
हस्ततः ॥ मध्यान्हे तूर्ध्वबाहुभ्यामुपतिष्ठेद्दिवाकरमिति ॥ प्रणम्य
देवान्विप्रानित्यस्यायमर्थः ॥ हरिपार्षदान् विष्णुभक्तान् देवा-
नित्यादित्रयविशेषणमेतत् ॥ विना पुत्रं विना शिष्यं ब्राह्मणान-
भिवादयेत् ॥ सन्मंत्रविद्योपदेष्टा ज्ञानवृद्धो गुरुः स्मृतः ।
पिता माता चाग्रजोऽपि गुरूनेतान्नमेत्सदेत्युक्तेः ॥ अवैष्णवा-
तिरिक्तदेवादीन् नमस्कारं कुर्यादिति ॥ तथा च जातवेदसे ॐ

नमो ब्रह्मणे इत्युक्त्वा संध्यायै नमः ॐ नमो ब्रह्मण्यदेवाय ॥ उ-
त्तमे शिखरे जाते। आकाशात्पतितं तोयं। नमोऽस्त्वनंतायेत्यादिना
देवान्नमस्कृत्य आत्मनः प्रवरगोत्रोच्चारणं कृत्वा अहं भो अभि-
वादये इत्युक्त्वा स्वसमीपस्थब्राह्मणानभिवादयेदित्युक्तं भवति।
इदं जपसंध्योपस्थानं सायंकालेऽपि समम् ॥ ॐ नमः प्राच्यै
दिशे इत्युक्त्वा प्राच्यादिदेवताः इंद्रः शची अग्निः तत्पत्नी स्वाहा
अनुसंध्येया ॥ एवं दक्षिणस्यां दिशि यमः तत्पत्नी शामला। तथा
पश्चिमायां दिशि वरुणः तत्पत्नी भागीरथी। प्रवहः तत्पत्नी प्रावाही-
तथा उत्तरायां दिशि कुबेरः तत्पत्नी महा। रुद्रः तत्पत्नी पार्वती
च अनुसंध्येयाः ॥ ऊर्ध्वायां दिशि गरुडः सौपर्णी कामः तत्पत्नी
रती च ॥ अनंतरं अधरायां दिशि। शेषः तत्पत्नी वारुणी। मित्रः

तत्पत्नी छाया ॥ तदनंतरं अंतरिक्षायां दिशि विनायकः तत्पत्नी सुस्वरा। विवस्वान् सूर्यः तत्पत्नी संज्ञा च ध्येयाः ॥ एवं संध्यायै नमः इत्यादावपि तत्तन्नामकदेवताऽनुसंधानं कृत्वा जातवेदसे इत्यादौ तन्मंत्रार्थानुसंधानं कृत्वा नमस्कारः कार्यः ॥ इदं तु ऋग्वेदिनां ॥ अन्यशाखिनां संध्योपस्थानं तु तत्तत्संप्रदायानुसारेण ज्ञेयं ॥ अनभिवाद्याः नारदीयपुराणोक्ताः ॥ विप्रं स्नानं प्रकुर्वंतं समित्कुशकरं तथा ॥ उदपात्रधरं चैव भुंजंतं नाभिवादयेत् ॥ अभ्यक्तशिरसं चंडं धावंतमशुचिं तथा ॥ श्राद्धं व्रतं तथा दानं देवताभ्यर्चनं तथा ॥ यज्ञं च तर्पणं चैव कुर्वंतं नाभिवादयेत् ॥ सभायां यज्ञशालायां देवतायतनेष्वपि ॥ पुण्यक्षेत्रे पुण्यतीर्थे स्वाध्यायसमये तथा ॥ सभायै नम इत्येव वदे-

त्प्रत्येकशो न तु ॥ अभिवादे कृते यस्तु न करोत्यभिवंदनं ॥
आशिषं वा न कुरुते स याति नरकान्बहून् ॥ पादत्राणसमायुक्तः
संवेष्टितशिरास्तथा ॥ अनिवेदितयोनिश्च न कंचिदभिवादयेत् ॥
एवमुपस्थानांते । यस्य स्मृत्येति विष्णुसमर्पणं कृत्वा प्रातरौपा-
सनं कुर्यात् ॥ औपासनकालमाह दक्षः ॥ संध्याकर्मावसाने तु
कुर्यादौपासनं द्विजः ॥ तच्च स्मार्तविवाहाग्नौ कुर्वीत प्रत्यहं गृ-
ही ॥ कृतदारो नैव तिष्ठेत्क्षणमप्यग्निना विना ॥ तिष्ठेच्चेत्स द्विजो
व्रात्यस्तथैव पतितो भवेदित्युक्तेः ॥ औपासनं गोमयलिप्ते
कुंडे वा स्थंडिले कुर्यात् ॥ कुंडलक्षणमुक्तं ॥ परशुरामीये ॥ त्रि-
ष्वेकमेखलं कुंडं विप्रादीनां क्रमाद्भवेत् ॥ प्रथमा द्व्यंगुला प्रोक्ता
द्वितीया त्र्यंगुला तथा ॥ तृतीया मेखला प्रोक्ता चतुरंगुलमानत

इति ॥ कुंडखातपरिमाणं तु ॥ यो यत्कुंडस्य विस्तारो निम्नत्वं तावदीरितमिति ॥ कुंडमानं वदंत्येके शतस्यार्धेऽष्टपर्वकं ॥ शतेऽर्कपर्वमानं स्यात्सहस्रार्धे नृपांगुलमिति ॥ अष्टपर्वकं अष्टांगुलं ॥ अर्कपर्वं द्वादशांगुलं । नृपांगुलं षोडशांगुलमित्यर्थः ॥ अनुयागे तु । पूर्वोक्तलक्षणैर्युक्तं कुंडं तालप्रमाणकं ॥ उक्तं तु नार्चने चैव न स्थिते तु चतुर्मुखेति ॥ तालो मणिबंधः ॥ मध्यमोत्तमवीर्याणां चतुरस्रं फलप्रदं ॥ सर्वेषामेव मंत्राणां वृत्तं स्यात्सार्वकामिकमिति ॥ विष्णुः । बहुशुद्धे घने चाग्नौ सुसमिद्धे तथैव च ॥ अधूमे लेलिहाने च होतव्यं कर्मसिद्धये ॥ योनार्चिषि जुहोत्यग्नौ ह्यंगारे चैव मानवः ॥ मंदाग्निरामयावी च दरिद्रो भुवि जायते ॥ द्रव्यं तु ॥ घृतमोदनसक्त्वादि तंडुलादिकृताकृतं ॥

व्रीह्यादीत्यक्तं प्रोक्तमिति हव्यं त्रिधामतमिति ॥ अभावे व्री-
हियवयोर्गोधूमा दधि वा पयः। द्विजस्तयोरभावे तु जुहुयादु-
दकेन वा ॥ अरुणोदयकाले स्नानाशक्तः सूर्योदये औपासनं
कुर्यात् ॥ अस्य कर्तारः ॥ स्वयं पत्नी पुत्रः शिष्यः कुमारिका ।
तत्रायं प्रकारः ॥ अग्नौ अर्चनं कृत्वा । चत्वारिशृंगा इत्युक्तप्रका-
रेण अग्निदेवतां ध्यात्वा । तत्रांगारवर्णमित्यादि प्रकारेण अग्न्यं-
तर्गतश्रीमुरुयप्राणांतर्गतयज्ञपुरुषात्मकपरशुरामं ध्यात्वा प्रात-
राहुतिद्वयं दत्वा उपस्थानं कृत्वा श्रीकृष्णार्पणं कुर्यात् ॥ एवं
सायंकालेऽपि ॥ ऋत्विक् गुरुर्भ्राता भागिनेयः सुता पतिरिति
दक्षः ॥ समस्तहोमादिप्रकारास्तु तत्तत्सूत्रवृत्त्यादावुक्ता ज्ञे-
याः ॥ ततः प्रातःकालीनदेवपूजां कृत्वा तथा प्रदक्षिणानमस्का-

रांश्च कृत्वा ध्यानं कुर्यात् ॥ तत्रायं प्रकारः ॥ एकांते तु शुचौ देशे जनसंमर्दवर्जिते ॥ कुशाजिनाद्यासनगः स्वस्थचित्तः स्थिरः शुचिः ॥ समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ॥ संप्रेक्ष्य नासिकाग्रं तु दिशश्चानवलोकयन् ॥ अष्टपत्रे तु हृत्पद्मे मध्ये सूर्येंदुवन्हिगं ॥ पीठं तन्मध्यपद्मस्थं नारायणमनामयं ॥ उद्यदादित्यसंकाशं तेजसानुपमं सदा ॥ सहस्राणां च सूर्याणां सज्ज्ञानानंदरूपिणं ॥ अतिरक्ततलं भास्वन्नखप्रांतविभूषितं ॥ वृत्तजंघं वृत्तजानुं हस्तिहस्तोरुमीश्वरं ॥ महाकटितटोन्नद्धकांचीपीतांबरोज्ज्वलं ॥ निम्ननाभिं च त्रिवलिं सुसुवृत्तोरुबंधनं । विस्तारवक्षसंभ्राजत्कौस्तुभामुक्तकंधरं ॥ वनमालाधरं हारवैज-

१ दृशेत्यन्यत्र ॥

यंत्यादिभिर्वृतं ॥ पृथुदीर्घचतुर्बाहुं शंखचक्रगदांबुजैः ॥ युक्तमुन्निद्रपद्माक्षं स्फुरन्मकरकुंडलं ॥ पूर्णचंद्रायुतोद्रिक्तकांतिसन्मुखपंकजं ॥ सुभ्रुवं सुललाटांतं किरीटाबद्धमूर्धजं ॥ निःशेषदुःखशमनं नित्यानंदशुचिस्मितं ॥ लक्ष्मीधराभ्यामाश्लिष्टं स्वमूर्तिगणमध्यगं ॥ ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि ॥ सेव्यमानं महाभक्त्या ध्यायेत्तं पुरुषोत्तममिति ॥ गीताप्रणवकल्पतंत्रसारवाक्यानामयं समुदायार्थः ॥ अधिकारी मुमुक्षुः सम्यक् नद्यादौ स्नात्वा एकांते कुशाजिनवस्त्ररूपमृदुभूते आसने पद्मस्वस्तिकवीरादिशरीरासने चोपविश्य भूतोच्चाटनादि तत्वन्यासमातृकान्यासौ कृत्वा ऊरुद्वयोपरि हस्तद्वयं कृत्वा हृद-

ये हृढश्रवणमननवागग्रे[1] स्वेष्टदेवताप्रतिमां प्रस्थाप्यावलोकयन् ध्यानाभ्यासं कुर्यात् ॥ यथाशक्ति रेचकपूरककुंभकक्रमेण वायुधारणानंतरं ध्यानं कुर्यात् ॥ ततः हृदये अधोमुखं हृत्कमलमष्टपत्रं प्रणवेनोर्ध्वमुखं कृत्वा तेनैव विकास्य तत्कर्णिकायां सूर्यमंडलं तदुपरि चंद्रमंडलं तदुपरि त्रिकोणमग्निमंडलं ध्यात्वा तज्ज्वालायां रमारूपदिव्यरत्नमयमंडपं तन्मध्ये दिव्यरत्नखचितसुवर्णमयपीठं ध्यात्वा तत्र पीठदेवताः परदेवताद्याः आवाह्य पीठोपरि षट्कोणपद्मं ध्यात्वा कोणेषु देवस्याग्रे दक्षिणे सूर्यं सव्ये सोमं अग्रे वन्हिं एतान् दीपरूपान् ध्यात्वा देवस्य सव्ये श्रियं दक्षिणे भुवं पृष्ठभागे दुर्गां ध्यात्वा तत्र षट्-

१ स्वनासाग्रे इति प्रत्यंतरे ॥

कोणभूमौ अष्टदलपद्मं रमारूपं ध्यात्वा तत्र पद्मदलेषु सूर्यके-
सरेषु सोमं कर्णिकायां हुताशनं ध्यात्वा प्रत्येकं रमादलेषु मध्ये
कर्णिकायां च। विमलोत्कर्षणी ज्ञानाक्रिया योगा तथैव च ॥ प्रह्वी
सत्या तथेशानानुग्रहा चेति शक्तयः इत्युक्तं ॥ परमात्मभूतनव-
शक्तिः ॥ छत्रचामरदर्पणव्यजनगीतवादित्रनृत्यस्तोत्राणि ध्यात्वा
आत्मान्तरात्मा परमात्मा ज्ञानात्मा चेति सोपानदेवताः पर-
मात्ममूर्तीः ध्यात्वा कर्णिकोपरि तमो रजः सत्वमिति क्रमेण त्रि-
गुणमानिनीं लक्ष्मीं ध्यात्वा ततस्तल्पाकारं छत्राकारफणं शेषं
ध्यात्वा तदुपरि गुणत्रयाभिमानिनीं चित्रासनरूपां लक्ष्मीं ध्यात्वा
तत्र स्वरूपां लक्ष्मीं ध्यात्वा तत्र स्वरूपहृदये स्वरूपांगुष्ठपरि-
मितं बाह्यहृदये बाह्यांगुष्ठपरिमितं तत्पृष्ठभागे हृत्कमलव्यापिनं

प्रादेशपरिमितं तदधः कर्णिकामूले अंगुष्ठाग्रप्रमाणं च परमा-
त्मानं नारायणनामानं । इत्याद्युक्तप्रकारेण लक्ष्मीधराभ्यामि-
त्यादि तंत्रसारोक्तावरणदेवतासहितं उद्यदादित्यवर्णं मेघश्या-
मं वा ध्यायेत् ॥ अत्र विशेषः ॥ द्वात्रिंशल्लक्षणानि ध्येयानि ॥
तथाहि ॥ भुजनेत्रहनुजानुनासास्थानेषु दैर्घ्याणि त्वक्केशांगुलि-
दंतांगुलिपर्वसु पंच सौक्ष्म्याणि ॥ पाणिपादतलद्वयनेत्रांते ता-
लुस्थाने जिह्वायां अधरोष्ठे नखेषु रक्तानि ॥ कक्षकुक्षिवक्षो-
घ्राणस्कंधललाटेषु चेति षट्सु औन्नत्यं ॥ ललाटकटिवक्षःसु त्रिषु
स्थानेषु गंभीरत्वानि ॥ तथा चोक्तं लक्षणग्रंथे ॥ पंचदीर्घः पं-
चसूक्ष्मः सप्तरक्तः षडुन्नतः ॥ त्रिपृथुर्लघुगंभीरो द्वात्रिंशल्लक्ष-
णानि तु ॥ अत्र लघुशब्दो ऱ्हस्वार्थो ज्ञेयः ॥ तथा दक्षिणकरे

सहस्त्रारचक्रं अष्टारां गदां शतावर्तं शंखं च लक्षणं ॥ वामकरे चक्रशंखगदापद्मानि ध्येयानि ॥ तथाचोक्तं बृहद्ब्राष्ये ॥ सहस्त्रारेण चक्रेण चिन्हिता दक्षिणे करे ॥ गदामष्टाश्रयां चैव शतावर्तेन कंबुना ॥ वामे करे तथाब्जेन सहस्त्रदलभेन चेति ॥ भागवते च ॥ संचिंतयेद्भगवतश्चरणारविंदं वज्रांकुशध्वजसरोरुहलांछनाढ्यं ॥ पंचरात्रे च ॥ शंखचक्रगदापद्मैरंकितं पादपंकजं इति ॥ हृदये ध्येयमूर्तयस्तित्र उक्ता बृहद्ब्राष्ये ॥ हृदये सर्वशो व्यापी प्रादेशः पुरुषोत्तमः ॥ जीवानां स्थानमुद्दिष्टः सर्वदेवसनातनः ॥ हृत्कर्णिकामूलगतः सोऽङ्गुष्ठाग्रप्रमाणकः ॥ मूलेश इति नामास्मिन् सर्वे जीवाः प्रतिष्ठिताः ॥ अंगुष्ठमात्रपुरुषे कर्णिकाग्रस्थिते हरौ ॥ प्रविशंति सुषुप्तौ तु प्रबुद्ध्यंते ततस्त-

थेति ॥ सोऽयं त्रिरूपी भगवान् हृदयाख्यः प्रकीर्तित इति ॥ स्थानमायतनं प्रोक्तं प्रतिष्ठाधारकः पुमानिति वचनात् ॥ स्थानप्रतिष्ठाशब्दयोरर्थभेदो ज्ञातव्यः ॥ इदं च यावत्कालं ध्यानाभ्यासं कुर्यात् ॥ वासनामयप्रतीत्यनंतरं तस्यां प्रतिमायां वासनामयार्घ्योदकगंधपुष्पतुलस्यर्घ्यादिनैवेद्यतांबूलसुवर्णपुष्पादिकेनैव स्नानालंकारादिना मनसा कल्पितेन पूजां कृत्वा तत्प्रतिमांतर्गतविष्णुः निर्दोषः पूर्णज्ञानः पूर्णानंदः सर्वस्वामी पूर्णगुण इति ध्यानं कुर्यात् ॥ इदं च यावत्स्वरूपज्ञगुरुदर्शनं तावत्कुर्यात् ॥ पश्चात्तादृशगुरूक्तप्रकारेण यावन्मोक्षः तावद्ध्यानं कुर्यात् ॥ अपरोक्षज्ञानानंतरं च मोक्षे आनंदाभिवृद्ध्यर्थं ध्यानं कुर्यात् ॥ तथा वायुधारणाभ्यासेतिकर्तव्यमुक्तं गीतादौ ॥ प्रा-

णापानौ समौ कृत्वा नासाभ्यंतरचारिणौ ॥ संनियम्येंद्रियग्रामं चक्षुश्चैवांतरे भ्रुवोः ॥ कृत्वा परोक्षं यावत्स्यात्तावद्ध्यायीत नित्यशः इति ॥ अपरोक्षं । अपरोक्षज्ञानं ॥ ध्यानसमाह्यनंतरं संपुटाकारेण मातृकान्यासतत्त्वन्यासौ कृत्वा समर्पयेत् ॥ एतद्ध्यानांगं यमप्रत्याहारपरिमिताशनादिकं श्रीमद्भगवद्गीतायां भगवतोक्तं ज्ञेयं ॥ अहिंसा सत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ । यमास्त्वेते तु कथिताः स्वाध्यायो हरिपूजनं ॥ तपः शौचं तथा तुष्टिर्नियमाः परिकीर्तिताः ॥ खंडस्मृतिर्धारणा स्यादखंडा ध्यानमुच्यते ॥ अप्रयत्नसमाधिश्च दर्शनं चिरमानयेति ध्यानं ॥ ततः यथाशक्ति श्रीमद्ब्रह्मसूत्रभाष्यभागवतादिसच्छास्त्रव्याख्यानं कृत्वा पूजासाधनं श्रीतुलसीपुष्पगंधादिकं भानुशुक्रभौमवासरेषु

द्वादशीदर्शयोस्तथा ॥ व्यतीपाते वैधृतौ च मद्ध्यान्हादूर्ध्वमप्युत ॥ न स्नातस्तुलसीं छिंद्यान्न गृह्णीयात्क्रमेण च ॥ इत्यनिषिद्धदिने संपाद्य माध्यान्हिकस्नानं कृत्वा संध्यावंदनं कृत्वा ॥ मध्यान्हे तु विशेषोऽयं दद्यादर्घ्यं हंस इत्यृचा ॥ आकृष्णेन द्वितीयार्घ्यं गायत्र्या च तृतीयकं ॥ इति प्रमाणानुसारेण अर्घ्यत्रयं दत्वा उदुत्यमित्यनेन सूर्योपस्थानानंतरं जपं कृत्वा विष्णौ समर्प्य वेदतंत्रसारोक्तप्रकारेण विष्णोर्महापूजां कुर्यात्॥स्नानानंतरं गृहं प्रत्यागत्य पादौ प्रक्षाल्य गंडूषचतुष्टयं कृत्वा द्विराचम्य हस्तौ प्रक्षाल्य देवगृहसमीपं गत्वा दक्षिणपादपुरःसरं देहलीमुपस्पृश्य देवगृहं प्रविश्य द्वारपालान्नमेत् ॥ पूर्वद्वारे श्रियै नमः ॥ जयाय नमः॥विजयाय नमः॥दक्षिणद्वारे श्रियै नमः॥बलाय०॥ प्रबलाय०॥

पश्चिमद्वारे श्रियै०॥नंदाय नमः॥सुनंदाय नमः ॥ उत्तरद्वारे श्रियै०॥ कुमुदाय नमः ॥ कुमुदाक्षाय० ॥ इति द्वारपालान्नत्वा ॥ वंदे विष्णुं नमामीत्यादिना विष्ण्वादिसर्वदेवान्नत्वा नमो ब्रह्मण्यदेवाये-त्युक्त्वा अपराधसहस्राणीत्युक्त्वा वायवायाहि दर्शतेत्युक्त्वा । अग्निनाग्निः समिध्यत इति दीपं प्रज्वाल्य ॥ वेदिकायामधस्ति-ष्ठेद्देवस्याभिमुखोऽर्चकः ॥ कृतांजलिपुटो भूत्वा विनयान्नतकंधरः ॥ मानसान्वाचकान्पापान्क्षमस्व पुरुषोत्तम ॥ वैष्णवद्वेषहेतून्मे भस्म-सात्कुरु माधव ॥ आयताभ्यां विशालाभ्यां शीतलाभ्यां कृपा-निधे ॥ करुणारसपूर्णाभ्यां लोचनाभ्यां विलोकयेति विज्ञाप्य ॥ आगमार्थं तु देवानां गमनार्थं तु रक्षसामिति मंत्रेण घंटानादं कृत्वा ॥ घंटाग्रे ब्रह्मदैवत्यं मुकुले रुद्रदैवतं ॥ नादे सरस्वती चैव

नाले नागाधिदैवतम् ॥ येभ्यो मातेत्यस्य मंत्रस्य गयप्रात ऋषिः विश्वेदेवा देवता जगती छंदः मनुष्यगंधनिर्हरणार्थं जपे विनियोगः ॥ ॐ येभ्यो माता मधुमत्पिन्वते पयः पीयूषं द्यौरदितिरद्रिबर्हाः ॥ उक्थशुष्मान्वृषभरान्स्वप्नसस्ताँ आदित्याँ अनुमदा स्वस्तये॥ एवापित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः ॥ बृहस्पते सुप्रजा वीरवंतो वयं स्याम पतयो रयीणां ॥ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ॥ सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम । अथ मंडपध्यानं॥ उत्तप्तोज्ज्वलकांचनेन रचितेष्वेवंविधैः साधकैः ॥ अंगुष्ठतर्जन्यग्राभ्यां निर्माल्यमपनोदयेदित्युक्तप्रकारेण अहं रुद्रेभिरिति निर्माल्यं विसृज्य ब्रह्मपारस्तोत्रं पठेत् ॥ प्रचेतस ऊचुः ॥

ब्रह्मपारं मुने श्रोतुमिच्छामः परमं स्तवं ॥ जपता कंडुना देवो ये-
नाराध्यत केशवः ॥ १ ॥ श्री सोम उवाच ॥ पारं परं विष्णुरनंत-
पारः परः पराणामपि पारपारः ॥ सकारणं कारणतस्ततोऽपि त-
स्यापि हेतुः परहेतुहेतुः ॥ कार्येषु चैवं स हि कर्मकर्तृरूपैरशेषैर-
वतीह सर्वम् ॥ २ ॥ ब्रह्मप्रभुर्ब्रह्म स सर्वभूतो ब्रह्म प्रजानां प-
तिरच्युतोऽसौ ॥ ब्रह्माव्ययं नित्यमजं स विष्णुरपेक्षयाद्यैरखिलै-
रसंगः ॥ ३ ॥ ब्रह्माक्षरमजं नित्यं यथासौ पुरुषोत्तमः ॥ तथा रा-
गादयो दोषाः प्रयांतु प्रशमं मम ॥ ४ ॥ य एतद्ब्रह्मपाराख्यं[1] संस्तवं
परमं जपन् ॥ अवाप परमां सिद्धिं स समाराध्य केशवम् ॥ ५ ॥
स्वामिन्नमः श्रीरमण प्रसीद ॥ श्रीनृसिंहं मध्वगुरुं नत्वा जयमु-

---

१ एतद्वै इत्यन्यत्र पुस्तके ॥

स्वान्गुरून् ॥ ब्रह्मपारस्तुतिव्याख्यां करिष्यामो यथामति। वि-
विष्णुवराहपुराणादौ ब्रह्मपारस्तोत्रमाहात्म्यमुक्तं। तच्च तत ए-
वेति ज्ञेयं॥ तत्र प्रचेतस उचुः॥ ब्रह्मपारमिति ॥ अयमर्थः ॥
हेसोम ब्रह्म परिपूर्णगुणो विष्णुः। पारः संसारसमुद्रस्य तीर-
प्रापकः अर्शआद्यच् ॥ तत्प्रापकमित्यर्थः ॥ ब्रह्मपारनामकं प-
रमं स्तवं विष्णोः स्तोत्रं वयं इच्छामः॥ येन स्तवेन जपता जपं
कुर्वता कंडुना तन्नामकऋषिणा केशवो देवः आराध्यत ॥
राधसंसिद्धौ कर्मणि लङ् ॥ जपकाले कंडुऋषिणा ब्रह्मपार-
स्तोत्रजपेन विष्णुः प्रसन्नीकृतः॥ तत्स्तोत्रं मां प्रति वदेति भावः॥
चंद्रस्य मुने इति संबोधनं तु सर्वदा विष्णोर्मननशीलत्वादिति
भावः॥ मुनेरिति षष्ठ्यंतं वा। मुनेः कंडोः संबंधि स्तोत्रमित्य-

न्वयः ॥ सोम उवाच ॥ पारं परं विष्णुरिति ॥ अस्यार्थः ॥ पारं ।
पृपालनपूरणयोरिति धातोः भावे इति सूत्रेण भावे घञ् । तथा
अर्शआद्यच् ॥ ब्रह्मविशेषणत्वान्नपुंसकं ॥ सर्वत्र सर्वदा व्याप्त-
त्वात्पार इत्यर्थः ॥ पारं विलक्षणं विष्णुः चेष्टकत्वबलशीलः ॥
णकारो बलं षकारः प्राणात्मेति श्रुतेः ॥ उकारस्य ताच्छील्यार्थ-
कत्वात् ॥ अनंतपारः अनंतः अपरिमितः पारः पालनं यस्यासौ
पालनार्थधातोः अकर्तरि च कारके संज्ञायामिति कर्मणि घञ् ॥
परेभ्यो उत्तमेभ्यो रमाब्रह्मादिभ्यो उत्तमः । निरवधिकोत्तम
इत्यर्थः॥ परः स्यादुत्तमार्थेऽपि वैरिदूरेषु केवले इति विश्वः॥ प-
रमार्थरूपी । परमार्थानि यथार्थानि रूपाणि रामकृष्णादीनि
यस्य संतीति तथोक्तः ॥ स ब्रह्मपारः ।ब्रह्मणि वेदे पारः प्रीतिः ।

तया सहितः तेन सहेति बहुव्रीहिः ॥ वेदस्य स्वप्रतिपाद्यत्वात् तत्र प्रीतियुक्त इत्यर्थः पृप्रीतौ इति स्वादिगणस्थधातोर्भावे घञ् ॥ परपारभूतः परेषां ब्रह्मादीनां संसारसमुद्रस्य पारः तीरभूतः ॥ पराणां वैरिणां परः अतिदूरे विद्यमानः ॥ विष्णुवैष्णवद्वेषिणामप्राप्य इत्यर्थः ॥ अपिशब्दः विशेषेण समुच्चये ॥ पारं व्यापारो एतज्जगत् पृङ्व्यायाम इत्यतः कर्मणि घञ् ॥ व्यायामो व्यापारः तस्य व्यापारो यस्मात्स तथोक्तः ॥ अस्मादेव धातोः भावे घञ् । सर्वनियामक इति यावत् । सकारणं कारणतः ॥ अवतीह सर्वं ॥ अस्यार्थः ॥ सः सारत्वात्स इति प्रोक्त इति श्रुतेः कारणं सर्वजगद्विनाशकं कृञ् हिंसायामित्यतः करणाधिकरणयोश्चेति चकारात्कर्तरि ल्युट् ॥ करणे वा कारणतः

कारणेषु इतरेभ्योऽपि सप्तम्यंतात्तसिः ॥ ततः व्याप्तः तनोतेः क्तप्रत्यये अनुदात्तोपदेशेति नकारलोपः ॥ तस्य सर्वजगतः हेतुः कारणं जनक इति यावत् ॥ परहेतुः हेतुः ॥ परस्य स्वापेक्षया भिन्नस्य जगच्चेतनात्मकप्रपंचस्य हेतुः कारणं। रमाब्रह्मादिभ्यो हेतुः ज्ञानवृद्धिप्रदः। हि गतौ वृद्धौ चेति धातोरंतर्भावितण्यर्थात् औणादिकस्तुन्प्रत्ययः एवं कार्येषु च ततः व्याप्त इत्यन्वयः ॥ स विष्णुः कर्मकर्तृरूपैः कर्माणि कर्तारश्च उपलक्षणमेतत् ॥ तेन कारणादिकमपि गृह्यते ॥ तेषु षट्कारकेषु विद्यमानानि यानि स्वस्वरूपाणि तैरशेषैः सर्वैः सर्वं जगत् इत्थं लोके अवति रक्षति ॥ २ ॥ ब्रह्मप्रभुर्ब्रह्म स सर्वभूत इति ब्रह्मप्रभुः ब्रह्मणः लक्ष्म्याः प्रभुः पतिः ॥ ममयोनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहं । सं-

भवः सर्वभूतानां ततो भवति भारतेति गीतोक्तेः॥ योनिः पत्नी॥ ब्रह्म अनंतगुणपूर्णं अथ कस्मादुच्यते ब्रह्मेति बृहंतो यस्मिन्गुणाः इति श्रुतेः स विष्णुः सर्वस्मिन् भूतः विद्यमानः असौ अच्युतः ब्रह्मप्रजानां ब्राह्मणरूपाणां प्रजानां स्वामी ब्रह्म उत्तरत्र स इत्युक्तेः परस्येति लभ्यते ॥ तस्य विष्णोः ब्रह्म ज्ञानं अव्ययं भोगतो नाशरहितं । नित्यं स्वरूपेण नाशरहितं अजं उत्पत्तिशून्यं स विष्णुः अखिलैः समस्तैः अपक्षयाद्यैः अपक्षयो देहादिनाशः॥ स आद्यो येषां तैः दोषैः असंगी संबंधशून्यः ॥ यस्य ज्ञानादिकं उत्पत्तिनाशशून्यं स विष्णुः सर्वदोषशून्य इति भावः ॥ ब्रह्माविरिंचिद्विजयोर्ऋत्विक्चंद्रार्कयोगयोः ॥ ब्रह्म प्रोक्तं तपोऽध्यासवेदज्ञानेषु सूरिभिः॥ इति विश्वः ॥ कंडुर्ऋषिः देशकालादि-

व्याप्तस्य विष्णोः सृष्ट्यादिकर्तृत्वं अनंतगुणपूर्णत्वं लक्ष्मीपति-
त्वादिकं चोक्त्वा स्वापेक्षितं प्रार्थयते ॥ ब्रह्माक्षरमिति ॥
अस्यार्थः ॥ असौ पुरुषोत्तमः । नित्यं निरंतरं यथा ब्रह्म सकल-
गुणपूर्णं अक्षरं नाशरहितं अजं उत्पत्तिशून्यं । तथा ज्ञानिनो
मम रागाद्यो दोषाः कामक्रोधादयः । प्रशमं नाशं प्रयांतु ॥ ५ ॥
सोम उवाच ॥ य एंतदिति ॥ स कंडुमुनिः । सिद्धिं मोक्षमित्यर्थः
॥ ६ ॥ श्रीब्रह्मपारस्तवराजटीका श्रीमध्वगुर्वादिसविष्णुतुष्टये ॥
छलारिनारायणवर्यपुत्रनृसिंहनाम्ना रचिता प्रभूयात् ॥ आ-
राध्यसे प्राणभृतां प्रणेश प्राणाधिनाथेन समीरणेन ॥ नाराय-
णज्ञानसुखैकमूर्तिः स्वामिन्मम श्रीरमण प्रसीद ॥१॥ मयि स्थितो

१. एतद्वै इति चान्यत्र ॥

मदङ्गेषु स्वतंत्रो व्याप्तवान्हरिः ॥ स विष्णुश्च स्वतंत्रं मां स्वे-
च्छया वर्तयत्यजः ॥ २ ॥ ॐनिषुसीद गणपते गणेषु त्वामाहु-
र्विप्रतमं कवीनाम् ॥ नऋते त्वत्क्रियते किंचनारे महामर्कंमघवं
चित्रमर्च ॥ इति प्रार्थयेत् ॥ ततः प्राणानायम्य ॥ संकल्प्य ॥ श्री
भारतीपतिमुख्यप्राणांतर्गतविष्णुप्रेरणया विष्णुप्रीत्यर्थं भगवतो
बलेन भगवतो वीर्येण भगवतस्तेजसा भगवतः कर्मणा भगवतो
वासुदेवस्य चाज्ञया गुरुप्रसादकृपया भगवता वासुदेवेन प्रेरितो-
ऽहं भगवतो वासुदेवस्य षोडशोपचारैः पूजाख्यं कर्म करिष्ये ॥
पूजासाधनद्रव्याणि देवस्य दक्षिणभागे अर्घ्योदकगंधतुलस्या-
दीनि निक्षिप्य ॥ ततो भूतोच्चाटनतत्त्वन्यासादीनि कृत्वा अष्टाक्ष-
रेण प्राणानायम्य विष्णुपूजाधिकारसिद्ध्यर्थं नारायणाष्टाक्षरमंत्र-

जपं १०८ कृत्वा पुनः प्राणायामः ॥ ध्यानश्लोकं पठित्वा कलशा-
र्चनं कुर्यात् ॥ तत्रायं विवेकः ॥ संभवे सप्तकलशानभिषेकस्य
सिद्धये ॥ बृहत्कलशमेकं तु द्वितीयं कुंभसंज्ञितं ॥ नैवेद्यप्रोक्षणायैकं
पंचपात्रप्रपूरकं ॥ पानीयार्थं च गंधार्थं हस्तप्रक्षालनार्थकं ॥ एवं
वै सप्त कलशान् पंच त्रीनेकमेव वा ॥ असंभवे च सर्वेषां भिन्न-
पात्राणि कल्पयेत् ॥ एवं कलशान् स्थापयित्वा पीठपूजां कुर्या-
त् ॥ पीठमध्ये मूलमंत्रेण परदेवतायै श्रीलक्ष्मीनारायणाय नमः ॥
देवस्य वामभागे गुरुभ्यो नमः ॥ दक्षिणे सर्वदेवताभ्यो नमः
पुनर्वामभागे सर्वगुरुभ्यो नमः ॥ अत्र पीठावरणपूजादौ देव-
पूजकयोर्मध्यभागः प्राची ज्ञेयः ॥ ततः सव्याकारेण देवस्य अ-
ष्टदिक्कल्पना ज्ञेया । आग्नेयादिदिक्षु प्रागधोभागेषु धर्माधि-

पतये यमाय नमः ॥ ज्ञानाधिपतये वायवे नमः॥ वैराग्याधिपतये शिवाय नमः ॥ ऐश्वर्याधिपतये इंद्राय नमः॥ पीठस्य फलकेषु प्राच्यादिचतुर्दिक्षु ॥ अधर्माधिपतये निर्ऋतये नमः॥ अज्ञानाधिपत्यै दुर्गायै नमः॥ अवैराग्याधिपतये कामाय नमः ॥ अनैश्वर्याधिपतये रुद्राय नमः ॥ मध्ये वक्ष्यमाणाः योगपीठपर्यंताः एकैकस्योपरि ज्ञेयाः॥ मध्ये परमपुरुषाय नमः॥ आधाररूपिण्यै शक्त्यै नमः॥ विष्णुकूर्माय तत्पुच्छाश्रिताय वायुकूर्माय नमः ॥ वायुरूपकूर्मपुच्छाश्रितानंतनामकशेषाय नमः॥ तत्फणाश्रितपृथिव्यै नमः॥ क्षीरसागराय नमः॥ रमारूपश्वेतद्वीपाय नमः॥ तत्र रमारूपाय महते दिव्यरत्नमंडपाय नमः॥ तन्मध्ये रमारूपकंदनालसहितपद्माय नमः ॥ ॐसूर्य-

मंडलाय० ॥ ॐसोममंडलाय० ॥ ॐहुताशनमंडलाय० ॥ एवं सूर्यादीन्त्रीनासनउपर्युपरि ध्यायेत् ॥ तथा पद्मभूमिषट्कोणेषु अग्रेतनदक्षिणकोणे सूर्याय नमः । वामकोणे सोमाय नमः । देवसन्मुखकोणे हुताशनाय नमः ॥ देवस्य वामभागकोणे सत्वात्मिकायै श्रियै नमः ॥ दक्षिणकोणे रजोभिमानिन्यै विनतादेवतायै भूम्यै नमः ॥ देवस्य पृष्ठभागकोणे उपबर्हणरूपायै दुर्गायै नमः ॥ सोमपानस्थले पूर्वादिचतुर्दिक्षु ॥ आत्मने० । अंतरात्मने० ॥ परमात्मने नमः ॥ ज्ञानात्मने० ॥ कमलाष्टपत्रेषु पूर्वाद्यष्टदिक्षु । विमलायै० ॥ उत्कर्षिण्यै० ॥ ज्ञानायै० ॥ क्रियायै० ॥ योगायै० ॥ प्रह्व्यै नमः ॥ सत्यायै० ॥ ईशानायै० ॥ मध्ये अनुग्रहायै० ॥ अग्निमंडलोपरि तमोऽभिमा-

निन्यै दुर्गायै० ॥ रजोऽभिमानिन्यै धरायै० ॥ सत्वाभिमानिन्यै श्रियै नमः ॥ तदुपरि हरेः सूर्यस्य वामकोणे सोमस्य देवस्य सन्मुखकोणे हुताशनाय नमः ॥ देवस्य वामभागकोणे सत्वात्मिकायै० ॥ योगपीठस्वरूपात्मने श्रीमदनंताय नमः ॥ तदुपरि सत्वाद्यात्मकरसारूपचित्रासनायै नमः ॥ इत्युक्त्वा ॥ तत्र बृहत्कलशमभिषेकार्थं स्थापयित्वा पूजयेत् ॥ कलशस्य मुखे विष्णुः० ॥ अयांतु देवपूजार्थं दुरितक्षयकारकाः ॥ इत्युक्त्वा ॥ निर्विषीकरणार्थं तार्क्ष्यमुद्रां प्रदर्श्य ॥ अमृतीकरणार्थं धेनुमुद्रां पवित्रीकरणार्थं शंखमुद्रां० । संरक्षणार्थं चक्रमुद्रां प्र० ॥ दिग्बंधनार्थं गदामुद्रां प्रदर्श्य ॥ संशोधनार्थं पद्ममुद्रां प्रदर्शयेत् ॥ मुद्रालक्षणं ॥ हस्तौ तु विमुखौ कृत्वा ग्रंथयित्वा कनि-

ष्ठिकां ॥ एषा गरुडमुद्रा स्यादघसर्पविनाशनी ॥ १ ॥ हस्तद्वये
लधो कृत्वा संमुखे च परस्परं ॥ वामांगुलीर्दक्षिणस्य चांगुलीनां
च संधिषु ॥ प्रदर्श्य मध्यमाभ्यां तु तर्जन्यौ द्वौ प्रयोजयेत् ॥
कनिष्ठे द्वेऽनामिकाभ्यां संयुक्ता धेनुमुद्रिका ॥ २ ॥ वामांगुष्ठं तु
संगृह्य दक्षिणेन तु मुष्टिना ॥ कृत्वोत्थानं तथा मुष्टिमंगुष्ठं तु प्रसार-
येत् ॥ वामांगुल्यस्तथाश्लिष्टाः संयुक्ताः सुप्रसारिताः ॥ दक्षिणांगुष्ठ-
संस्पृष्टा मुद्रा शंखस्य चोदिता ॥ ३ ॥ हस्तौ तु संमुखं कृत्वा
संलग्नौ सुप्रसारितौ ॥ कनिष्ठांगुष्ठकौ लग्नौ मुद्राचक्रस्य सि-
द्धिदा ॥ ४ ॥ अन्योन्याभिमुखौ हस्तौ कृत्वा तु ग्रंथितांगुली ॥
अंगुल्यौ मध्यमे भूयः संलग्ने सुप्रसारिते ॥ गदामुद्रेयमा-
ख्याता पुरा युक्तिकरी तथा ॥ ५ ॥ करौ तु संहतौ कृत्वा संहता

उन्नतांगुली ॥ तत्रांतर्मिलितांगुष्ठौ कुर्यादेवाब्जमुद्रिका ॥६॥
बृहत्कलशे एकपंचाशद्वर्णानां चतुर्विंशति मूर्तयः ॥ आत्माद्या
वासुदेवाद्या विश्वाद्या मच्छकच्छपौ । क्रोडो नृसिंहः सबटुर्जाम-
दग्निरघूद्वहौ । वासिष्ठयादवौ कृष्णावात्रेयौ बुद्धकल्किनौ । शिं-
शुमारश्चेति शतं कलाः कलशदेवताः ॥ अजादिशिंशुमारांताः
मूर्तीः आवाह्य ॥ द्वितीयकलशे शिंशुमारं कल्किबुद्धौ दत्तात्रेयं
च कृष्णकं ॥ वेदव्यासं रामचंद्रं भार्गवं वामनं तथा ॥ नारसिंहं
वराहं च कूर्ममत्स्यौ तुरीयकं ॥ प्राज्ञतैजसविश्वानिरुद्धं प्रद्यु-
म्ननामकं ॥ संकर्षणं वासुदेवं ज्ञानात्मपरमात्मकौ ॥ अंतरा-
त्मानमात्मानं कृष्णं हरिमुपेंद्रकं ॥ जनार्दनाच्युतौ नारसिंहा-
धोक्षजकौ तथा ॥ पुरुषोत्तमानिरुद्धौ द्वौ प्रद्युम्नं वासुदेवकं ॥

संकर्षणं वामकुक्षिं पद्मनाभं हृषीकपं ॥ श्रीधरं वामनं च त्रि-
विक्रमं मधुसूदनं ॥ श्रीविष्णुं चैव गोविंदं माधवं तदनंतरं ॥
नारायणं केशवं च नारसिंहं च लालुकं ॥ हंसं सारात्मरूपं च
षड्गुणं शांतसंविदं ॥ वरं लक्ष्मीपतिं रामं यज्ञं मनुभगं तथा ॥ फ-
लिनं बलिरूपं च परमन्यं च धन्विनं ॥ दंडिनं थबतारौ च
णात्मानं ढरिणं तथा ॥ डरकं ठरकं टंकिं यमौ श्रीझाडितारिणं ॥
जनार्दनं ततो छंदोगम्यं चार्वंगिनं तथा ॥ ङसारं घर्मौ गरुडासनं
श्रीखपतिं तथा ॥ कपिलं चार्यगर्भांतावौरसौजोभृदैरकान् ॥
एकात्मानं लृजिलशम्रघमृतुंभरं तथा ॥ ऊर्जौग्रेशेंद्रानंदाजान्ना-
रायणमथापरं ॥ एतान्देवानाह्वयामि पूर्णकुंभोदके शुभे ॥ इ-

१ ऐरसानिति पुस्तकान्तरे ॥

त्येकोत्तरशतमूर्तीः आवाह्य ॥ बृहत्कलशकुंभस्थदेवेषु तत्त्व-
न्यासमातृकान्यासौ कृत्वा ॥ नारायणाष्टाक्षरस्य वर्णन्यासं कृ-
द्धोल्कादि पंचांगन्यासं उद्यद्भास्वेति ध्यानं च कृत्वा नाराय-
णाष्टाक्षरेण प्रत्येकं पुरुषसूक्तषोडशऋग्भिः वा प्रत्येकमावाहनं
अर्घ्यपाद्याचमनीयं मधुपर्कं पुनराचमनीयं स्नानं वस्त्रं यज्ञोप-
वीतं आसनादिगंधपुष्पतुलसीसमर्पणं कृत्वा कलशयोरावरण-
पूजा कार्या ॥ मध्ये ॐपरमपुरुषाय नमः ॥ वामे ॐलक्ष्म्यै नमः॥
दक्षिणे ॐधरायै नमः ॥ पूर्वाद्यष्टदिक्षु ॥ ॐकृद्धोल्काय नमः ॥
ॐसहस्रोल्काय० ॥ ॐमहोल्काय० ॥ ॐवीरोल्काय नमः ॥
ॐद्युल्काय नमः ॥ ॐसहस्रोल्कायेति चतुर्वारं ॥ इति द्वितीया-
वरणं ॥ तद्बहिः पूर्वाद्यष्टदिक्षु ॥ ॐवासुदेवाय० ॥ ॐमाया-

यै० ॥ ॐसंकर्षणाय० ॥ ॐजयायै० ॥ ॐप्रद्युम्नाय० ॥ ॐ कृत्यै नमः ॥ ॐअनिरुद्धाय० ॥ ॐशांत्यै० ॥ इति तृतीयावरणं ॥ तद्बहिः एवमेव अष्टदिक्षु दिशि दिशि द्वौ द्वौ कोणे कोणे त्वेकैकमिति केशवादि द्वादशावरणं ॥ एवं संकर्षणादि द्वादशावरणं वा ज्ञेयं ॥ इदं चतुर्थावरणं ॥ तद्बहिः एवमेवाष्टदिक्षु ॥ मत्स्यायनम इत्यादि ॥ १०॥ अनंताय० । विश्वरूपाय० ॥१२॥ इदं पंचमावरणं ॥ तद्बहिः अष्टदिक्षु ॥ अनंताय० ॥ वारुण्यै०॥ ब्रह्मणे० सरस्वत्यै० ॥ वायवे० भारत्यै० ॥ ईशानाय० गिरिजायै० ॥ देवस्याग्रे वीशाय नमः ॥ तद्वामे सौपर्ण्यै० ॥ षष्ठमावरणं ॥ तद्बहिः पूर्वाद्यष्टदिक्षु ॥ पूर्वदिक्पतये सुराधिपतये सभार्याय सपुत्राय इंद्राय सांगाय सायुधाय सवाहनाय सपरिग्रहाय

श्रीविष्णुपार्षदाय नमः ॥ अग्नये तेजोऽधिपतये सभार्याय सांगाय सायुधाय सवाहनाय सपरिग्रहाय श्रीविष्णुपार्षदाय नमः ॥ धर्माधिपतये धर्माय सभार्याय० ॥ रक्षोधिपतये निर्ऋतये सभा० जलाधिपतये वरुणाय० ॥ प्राणाधिपतये वायवे० ॥ नक्षत्राधिपतये सोमाय सभार्याय० ॥ भूताधिपतये रुद्राय० ॥ निर्ऋतिवरुणयोर्मध्ये अधोलोकाधिपतये नागाधिपतये शेषाय सभार्याय० ॥ इंद्रईशानयोर्मध्ये सर्वलोकाधिपतये ब्रह्मणे सभार्याय० ॥ इत्यावरणदेवताभ्यः अर्घ्यपाद्याचमनीयं मधुपर्कं पुनराचमनीयं वासो विभूषणं उपवीतमासनं गंधपुष्पादि समर्पयामीति अर्घ्यादिकं दद्यात् ॥ ततः कलशकुंभदेवताभ्यः धूपदीपनैवेद्यान् पुनर्धूपनीराजनं इत्यादि मूलमंत्रेण दद्यात् ॥ ततः

पुष्पांजलिं दत्वा कलशं प्रार्थयेत् ॥ कलशः कीर्तिमायुष्यं प्रज्ञां मेधां श्रियं बलम् ॥ योग्यतां पापहानिं च पुण्यवृद्धिं च साधयेत्॥सर्वतीर्थमयो यस्मात्सर्वतीर्थमयो यतः॥ अतो हरिप्रियोऽसित्वं पूर्णकुंभ नमोऽस्तु ते ॥ यस्य स्मृत्याचेति हरौ समर्पयेत् ॥ ततः शंखपूजा ॥ कलशोदकं शंखे संपूर्य । तुलसीं निक्षिप्य ॥ शंखं चंद्रार्कदैवत्यं० ॥ त्रैलोक्ये यानि० ॥ यः स्नापयति गोविंदं तस्य पुण्यमनंतकं ॥ इति पठित्वा ध्यानमावाहनं सार्घ्यं पाद्यं च मधुपर्कयुक् ॥ पुनराचमनं गंधं पुष्पं चेत्यष्टपूजनं ॥ शंखपृष्ठेन तोयं तु देवोपरि न निक्षिपेत् ॥ शंखमूले चक्रमुद्रां शंखमध्ये धेनुमुद्रां शंखाग्रे शंखमुद्रां प्रदर्श्य ॥ यस्य स्मृत्याचेति हरौ समर्पयेत् ॥ ततः षट्पात्राणि प्रस्थाप्य ॥ विष्णुगा-

यत्र्या षट्पात्रेषु उदकं संपूर्य ॥ नारायणाय विद्महे वासुदेवाय धीमहि ॥ तन्नो विष्णुः प्रचोदयात् ॥ अर्घ्यं वायुपदे प्रोक्तं नैर्ऋत्यां पाद्यमेव च ॥ ईशे त्वाचमनीयं च आग्नेये मधुपर्ककं ॥ पुनराचमनं मध्ये स्नानपात्रं तथैव च ॥ अर्घ्ये श्रिया समायुक्तं पाद्यपात्रे सरस्वतीं ॥ रंतीमाचमनीये च मधुपर्के पितामहं ॥ शांतिं च पुनराचामेत्स्नानीये वरुणं स्मरेत् ॥ अर्घ्ये तु दानमुद्रां तु पाद्ये चांजलिमुद्रिकां ॥ गोकर्णमुद्रां चाचामे मधुपर्के तु सूकरीं ॥ पुनराचमने स्नाने हंसमुद्रा प्रकीर्तिता ॥ तेषु गंधपुष्पादिकं समर्प्य । ततः पंचामृतस्नानार्थं पंचपात्राणि स्थापयेत् ॥ मध्ये क्षीरं तु दध्यादि न्यसेत्पूर्वादिषु क्रमात् ॥ दुग्धे तु देवो

१ भारतीमाचमनीये चेति कुत्रचित् ॥

गोविंदः दधि वामनदैवतं ॥ आज्यं तु विष्णुदैवत्यं मधौ च मधुसूदनं॥शर्करे चाच्युतं विंद्यात्ताः पंचामृतदेवताः ॥ पंचामृतदेवताभ्यः कलशवत् पंचमुद्राः प्रदर्शयेत् ॥ पंचामृतदेवताभ्यो गंधपुष्पतुलसीदलानि निधाय ॥ मूलेनाष्टवारमभिमंत्र्य । नमस्कृत्य ॥ विष्णुगायत्र्या अभिमंत्र्य ॥ ततः शालग्रामादिप्रतिमायां आवाहनार्थं पूर्ववत्पीठपूजां कुर्यात् ॥ चतुष्कोणं तु पीठं स्यात् षट्कोणं तस्य मध्यतः ॥ कर्णिकायां न्यसेत्सूर्यसोमाग्नीनुत्तरोत्तरं ॥ तन्मध्येऽष्टदलं पद्मं तत्र पद्मे समर्चयेत् ॥ पूर्ववत्पाठपूजां कृत्वा पीठस्थप्रतिमायां तेजोमयीं प्रतिमां ध्यात्वा तत्र मुख्यप्राणं ध्यात्वा तत्र स्वबिंबरूपं हरिमावाहयेत् ॥ तत्प्रकारस्तु । विष्णोरासनभूताय दिव्यरत्नमयाय च ॥ प्रधानपुरुषेशाय महा-

पीठाय ते नमः॥कुंडलरूपेणासनरूपाय उपबर्हणछत्ररूपाय ह-
रेर्योगपीठस्वरूपात्मने श्रीमदनंताय नमः ॥ इति पीठदेवतामा-
वाह्य ॥ अर्घ्यं पाद्यं त्वाचमनं साचामं मधुपर्ककं ॥ स्नपनं वसनं
चैव गंधपुष्पे विभूषणं ॥ ईशे तानुपचारांस्तु सर्वेभ्यस्तु पृथुग्व-
देत् ॥ अंगाद्यावरणस्थेभ्यः स्वाहांतैः स्वस्वनामकैः ॥ आस-
नादि तु पीठस्थदेवानां विष्णुना सह ॥ धूपदीपादिकं सर्वं सर्वे-
भ्यो विष्णुना सह॥सुषुम्नानाडीस्थं अधोमुखं हृत्कमलं वायुबी-
जेनोन्मुखीकृत्य विज्ञानेन प्रकाश्य तत्कर्णिकायां स्थितं श्रीम-
न्नारायणं उद्यद्भास्वदिति ध्यात्वा तुलसीपुष्पाणि गृहीत्वा ॥ हृ-
दयस्था हरेर्मूर्तिर्जीवो यत्प्रतिबिंबकः ॥ यद्वशे वर्तते जीवः सा तु
जीवकलास्मृता ॥ आत्मार्थं ॥ आ॒त्मा दे॒वाना॒ं भुव॑नस्य॒ गर्भो॑

यथावशं चरति देव एषः॥घोषायदंश्रृण्विरेऽनुरूपं तस्मै वाताय ह-
विषाविधेमेति ऋचामूलेन सह ॥ परार्थं ॥ सूर्यांतर्गतश्रीमन्नारा-
यणं । ध्येयः सदा० धृतशंखचक्र इत्यादिना ध्यात्वा सहस्रशी-
र्षेति ऋक् ॥ एह्येहि मम हृत्पद्मस्थित श्रीपुरुषोत्तम ॥ आवा-
हयामि पीठेऽस्मिन् प्रतिमायां रमापते ॥ भो स्वामिन्जगतां नाथ
यावत्पूजावसानकं ॥ तावत्संप्रीतिभावेन प्रतिमायां स्थिरो भव ॥
भोः स्वामिन् ममांतर्गतमुख्यप्राणांतर्गत श्रीलक्ष्मीनारायणेत्युक्त्वा-
आवाहनमुद्रया पीठस्थप्रतिमायां आवाहयामीति द्विरुच्चारये-
त् ॥ आवाहनं स्थापनं च सांनिध्यं संनिरोधनं ॥ सन्मुखीक-
रणं चैव अवगुण्ठनमेवचेति षण्मुद्राः प्रदर्शयेत् ॥ प्रत्येकमू-
लमंत्रेण तत्तन्मुद्रयावाहितो भव प्रार्थितो भव प्रसन्नो भव ॥

शालग्रामे स्वयं व्यक्ते नावाहनविसर्जने ॥ चक्रांकिते स्वयं व्यक्तप्रतिमायां च पुस्तके ॥ शालग्रामादि संस्थाप्य ध्यायेद्बिंबेन चैकतां ॥ मुद्रालक्षणं ॥ हस्ताभ्यामंजली कृत्वा नामिकामूलपर्वणोः ॥ अंगुष्ठौ निक्षिपेत्सेयं मुद्रा त्वावाहनी मता ॥ अधोमुखं त्वियं चेत्स्यात्स्थापनी मुद्रिका मता ॥ उच्छ्रितांगुष्ठमुष्ट्योश्च संयोगात्संनिधायिनी अंतःप्रवेशितांगुष्ठौ सा वै संरोधनी मता ॥ हस्तौ तु संमुखौ कृत्वा मुष्टीकृत्वा विगुंठयेत् ॥ तयोरुपरि चांगुष्ठौ निक्षिपेद्विवृतौ तथा ॥ अवगुंठनमुद्रेयं सर्वकामफलप्रदा ॥ मुष्टिद्वयस्थितांगुष्ठौ सन्मुखौ च परस्परं ॥ संश्लिष्ट उच्छ्रितौ कुर्यात्सेयं संमुखमुद्रिका ॥ प्रसृतांगुलिकौ हस्तौ मिथः श्लिष्टावसंमुखौ ॥ कुर्यात्स्वहृदये सेयं मुद्रा प्रार्थनसंज्ञिका ॥ उत्तानौ तु

करौ कृत्वा प्रसार्य हृदयस्थितौ ॥ प्रसादमुद्रा विज्ञेया सर्वदेव-
प्रसादिनी ॥ ततः सांनिध्यप्रार्थनं ॥ सांनिध्यं कुरु देवेश सर्व-
संपत्करो भव ॥ त्वां भक्त्या पूजयाम्यद्य भोगैरर्घ्यादिभिः क्रमा-
त् ॥ विभो सकललोकेश कृष्ण विष्णो हरे प्रभो ॥ यागावसा-
नपर्यंतमत्रस्थित्वा जनार्दन ॥ भक्तस्य मम पूजां त्वं गृहीत्वा पाहि
मां विभो ॥ प्रतिमायां मातृकान्यासतत्त्वन्यासौ अष्टांगन्यासा-
दींश्च कृत्वा संनिधानजपं कुर्यात् ॥ ततः पादुके समर्प्य । स्ना-
नपीठमागच्छेत्युक्त्वा । उत्तिष्ठब्रह्मणस्पते इति उत्थाप्य भद्रं कर-
णेभिरिति स्नानपीठे उपवेश्य मूलमंत्रेण मृत्तिकाशौचं गंडूषा-
न्दंतकाष्ठं मुखप्रक्षालनं च कारयित्वा । दर्पणं च प्रदर्श्य ॥ आ-
पोहिष्ठेत्यर्घ्यं । आपःपुनंत्विति पाद्यं ॥ शंनोदेवीत्याचमनं गाय-

न्या मधुपर्कं ॥ शंनोदेवीति पुनराचमनं ॥ मूलमंत्रेण मलापकर्षणस्नानं ॥ आप्यायस्वेत्यादिभिः पंचामृतस्नानं कृत्वा ॥ आपोहिष्ठेति शुद्धोदकस्नानं कारयित्वा महाभिषेकं कुर्यात् ॥ शालग्रामाः समाः पूज्याः विषमा न कदाचन ॥ एकस्तु विषमे पूज्यः समेषु द्वितीयं न तु ॥ चक्रांकं मिथुनं पूज्यं नैकचक्रांकमर्चयेत् ॥ चक्रांकं मिथुनं पूज्यं शालग्रामं प्रतिप्रति ॥ आत्वाहर्षसूक्तं घर्मसूक्तं वैष्णवसूक्तं विश्वकर्मीयं समुद्रसूक्तं पावमानीयं पुरुषसूक्ताणुभाष्यनारायणवर्मब्रह्मसूत्राष्टमहामंत्रैः बृहत्कलशोदकेन शंखेनाभिषेकं कृत्वा ततः कुंभेनैवाभिषेकं कुर्यात् ॥ शिंशुमारादिकान्पूर्वं आह्वयेत्कलशे सुधीः ॥ अजादिमूर्तिभिः प्राज्ञ अभिषेकं समाचरेत् ॥ ततः अभिवस्त्रेति संपुटे वस्त्रं प्र-

सार्य तत्र तुलसीपत्राणि आस्तीर्य शालग्रामचक्रांकितानि नि-
धाय ॥ अनेकरत्नसंयुक्तां तुलसीदलसंयुतां ॥ विष्णुवक्षः स्थ-
ले मालां वैजयंतीत्युदाहृतां ॥ मूलेन वैजयंतीमालां समर्पयामि ॥
एवं सर्वेषूपचारेषु मूलमंत्रो ग्राह्यः ॥ देदीप्यमानचंद्रार्कज्वाला-
कोटिसमप्रभं ॥ विष्णुवक्षःस्थले भ्राजत्कौस्तुभं तु समर्पयेत् ॥
श्रीवत्सं चूडामणिं यज्ञोपवीतं आसनं आयुधानि गंधं च स-
मर्प्य अष्टमहामंत्रैः तुलसीपुष्पाणि समर्पयेत् ॥ केशवादिना-
मानि मत्स्यादिनामानि विश्वादिनामानि च पठेत् ॥ तत आव-
रणपूजां कृत्वा धूपं दद्यात् ॥ वनस्पत्युद्भवो० ॥ ध्येयं सदा प-
रिभवघ्नमभीष्टदोहं तीर्थास्पदं शिवविरिंचिनुतं शरण्यं ॥ भृत्या-

१ आपः पाद्येति पाद्यमिति कुत्रचित्पाठः ॥ अस्मिन्राष्ट्रे इत्यपि ॥

र्तिहं प्रणतपालभवाब्धिपोतं वंदामहे पुरुष ते चरणारविंदं ॥ नारायणाय परिपूर्ण० नमो नमस्ते ॥ आसीदुदारगुण० निमेषकांते ॥ नारायणं सुरगुरुं ॥ जयति हरि० ॥ श्रीपतिर्मानदो नः ॥ श्रीनारसिंह जय नारसिंह जय नारसिंह जय हरे ॥ धूपं समर्पयामि ॥ ततः आचमनं समर्पयामि ॥ साज्यं त्रिवर्तिसंयुक्तं० । दिव्यज्योतिर्नमोऽस्तु ते ॥ ब्राह्मणोऽस्य मुखमासीत् ॥ शूद्रो अजायत ॥ जय विठ्ठल जय विठ्ठल श्रीलक्ष्मीनारायणाय नमः ॥ दीपं समर्पयामि ॥ अथ नैवेद्यं ॥ वंदे वंद्यं सदानंदमिति द्वादशस्तोत्रं पठित्वा ॥ देवस्य पुरतो दक्षिणे भागे चतुरस्रमंडलोपरि अष्टदलपद्मं लिखित्वा ॥ नैवेद्यं संस्थाप्य ॥ अपरस्मिन्मंडले लवणव्यंजनादि संस्थाप्य ॥ तुलसीदलं नैवेद्ये निक्षि-

प्य । तत्समीपे पानार्यं अनुयागार्थं घृतं च निधाय ॥ पृथगुदकं शंखे निधाय ॥ तार्क्ष्यादिमुद्राः प्रदर्श्य ॥ विपुलीकरणार्थं धेनुमुद्रां शीतलार्थं चंद्रमुद्रां प्रदर्श्य ॥ मूलमंत्रेण द्वादशवारमभिमंत्र्य ॥ अद्य तिष्ठति यत्किंचित्कल्पितं चापरं गृहे ॥ पक्वमन्नं च पानीयं सर्वोपस्करसंयुतम् । यथाकालं मनुष्याद्यैर्भोक्ष्यमाणं शरीरिभिः । तत्सर्वं विष्णुपूजास्तु प्रीयतां मे जनार्दनः ॥ सौवर्णेस्थालिवर्ये मणिगणखचिते गोघृताक्तान्सुपक्वान्भक्ष्यान् भोज्यांश्च लेह्यानपि सकलमहच्चोष्यमाणं निधाय ॥ नानाशाकैरुपेतं समधु दधि घृतं क्षीरपानीययुक्तम् तांबूलं चाऽपि विष्णो प्रतिदिवसमहं मानसे चिंतयामि ॥ भोजं त्वामिंद्रवहं हुवेममदधिष्वामिंद्रापांसिवाजान् ॥ अविढींद्रचित्रयांनदुतीकृधिवृषन्निंद्रवस्य-

सोनः ॥ चंद्रमा मनसो जातः० ॥ द्यौः समवर्तत ॥ श्रीनिवास नमस्तुभ्यं महानैवेद्यमुत्तमं ॥ संगृहाण सुरश्रेष्ठ भुक्तिमुक्तिप्रदायक ॥ सत्यं त्वर्तेन परिषिंचामि ॥ अमृतोपस्तरणमसीति देवस्य दक्षिणहस्ते आपोशनं लक्ष्मीहस्तेन दत्वा तदुदकं दक्षिणभागे पात्रांतरे क्षिपेत् ॥ सुधारसं सुविपुलं आपोशनमिदं तव॥ गृहाण कलशानीतं यथेष्टमुपभुंजतामिति ॥ अमृतोपस्तरणमसि । प्राणात्मने अनिरुद्धाय स्वाहा ॥ अपानात्मने प्रद्युम्नाय स्वाहा ॥ व्यानात्मने संकर्षणाय स्वाहा ॥ उदानात्मने वासुदेवाय स्वाहा ॥ समानात्मने श्रीनारायणाय स्वाहा ॥ ब्रह्मणे स्वाहा ॥ त्वं सर्वयज्ञभोक्ता त्वं सर्वांतर्यामी सर्वगः ॥ त्वमेव जगदाधीशः

१ वंदे महापुरुषते इति प्रत्यन्तरे ॥

त्वदधीनस्त्वदाज्ञया ॥ परिवेषयती यं श्रीः मुख्यप्राणस्तु वी-
जयेत् ॥ भारत्याद्याः परिचरंति लिंद्राद्या द्वारपालकाः ॥ मध्ये
मध्ये पानीयं समर्पयामि ॥ देवस्य पवित्रान्नशाकादिकं समर्प-
णीयं ॥ शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत् ॥ इति
भाष्योक्तेः ॥ तानि निषिद्धानि हारीते चोक्तानि ॥ भाषादुष्टं क्रि-
यादुष्टं जातिदुष्टमिति त्रिधा ॥ संसर्गकालदुष्टं च वर्जयेद्दुष्ट-
पंचकं ॥ रूपाद्दुष्टं क्षयाद्गंधाद्भावाद्दुष्टं प्रकीर्तितं ॥ आरनालं च
मध्यं च करनिर्मथितं दधि ॥ हस्तदत्तं च लवणं क्षीरं घृतज-
लान्वितं ॥ ताम्रपात्रे तु यद्द्रव्यं क्षीरं लवणमिश्रितं ॥ ओदनं
च पुनः पक्वं तिलपिष्टं च भिस्सटं ॥ निर्यासांश्च विना हिं-
गुं श्वेतं च बृहतीफलं ॥ वंशांकुरौदुंबरे च तथा श्लेष्मतकीफलं॥

उपोदकी ह्यलांबुश्च पलांडुश्च मसूरकाः ॥ इति प्रोक्ताः क्रिया-
दुष्टं जातिदुष्टमथोच्यते ॥ अलांबु छत्रवृंताकं बिंबकोशातकीफ-
लं ॥ लशुनं गृंजनं शिग्रुं निष्पावांश्च कलिंगकान् ॥ श्वकाकपुंश्च-
लीभिश्च उदक्या सूतकादिभिः ॥ दृष्टं स्पृष्टं च दत्तं च भुक्त-
शेषं तथैव च ॥ अभक्ष्येण च संयुक्तं संसर्गाद्दूषितं हि तत् ॥
चातुर्मास्येषु शाकादिभोजनं हरिवासरे ॥ भोजनं तर्पणं श्राद्धं
करणं कालदूषितमिति ॥ रूपाद्दुष्टं मांसतुल्यं रूपयुक्तत्वाद्बिं-
बफलं ॥ क्षयात् नाशात् । गंधात् दुर्गंधात् । अलांबु द्विविधम-
पिनातिदुष्टं ॥ एकं कनडभाषायां[1] हालुकुंबलकायीत्युच्यते ॥
द्वितीयं रामकुंबलकायि ॥ त्यनगुंभाषायां तु उभयोः आनर्ग[2]-

१ तैलंगभाषायामित्यन्येषु ॥ २ आनिग्युपकायी राजानिग्युपयीत्यन्यत्रपुस्तके ॥

युकायिराजगुंमडिकायेति ॥ महाराष्ट्रभाषायां भोपळा । खुरा-
सानिभोपळेति ॥ अपसव्यभाषया कड्डूखुरासनीति मदनविनो-
दे वैद्यनिघंटौ तु ॥ अलांबुराजालांब्विति तुंबीमिष्टामहातुंबी रा-
जालांबुरलांबुनि ॥ कोशातकीफलं द्विविधं घृतकोशातकी शि-
रारहिता ॥ शिरायुक्ता चान्या इति ॥ क्वचित्क्वचिद्वाक्ये विशेषो-
क्तिर्वर्तते ॥ तथापि वृंताकादीनां सामान्यतो ग्राह्यत्वं ॥ शाकेषु
परिगणनाभावात् ॥ सामान्यतः शाकचतुष्टयजात्यवच्छिन्नं त्या-
ज्यमिति प्रतीयते ॥ एवमन्यान्यऽपि त्याज्यानि ॥ धान्यशा-
कादीनि पुराणादावुक्तानि ज्ञेयानि ॥ स्वस्य देवस्य मध्ये वस्त्रं
धृत्वा देवस्य भोजनपर्यंतं अष्टोत्तरं मूलेन जपेत् ॥ तदनंतरम-
नुयागं कुर्यात् ॥ ततः धूपदीपसमर्पणात्प्रागेव मूलग्रंथोक्तलक्षणे

कुंडे स्थंडिले वा स्वसूत्रोक्तप्रकारेणाग्निं प्रतिष्ठाप्य । अन्वाधानाद्याज्यसंस्कारं कृत्वा वैष्णवाग्निं सिद्धं कृत्वेध्माधानाज्यभागांतं हुत्वोक्तप्रकारेण पीठपूजां कृत्वा । तत्र अभ्यंतः भारतीरमणांतर्गतहरिणीपतिपरशुराममावाह्य पाद्यावरणांतोपचारं कृत्वा देवेन सह धूपदीपौ दत्वा देवाय नैवेद्यं समर्प्य नैवेद्यकाले होमार्थं पृथक्कृत्य नैवेद्येन सह स्थापितघृतान्नाद्यैश्च मूलमंत्रेणाष्टोत्तरशतं सकृत्पुष्पांजलिपूर्वकं पीठावरणदेवताभ्यश्च चतुराज्याहुतीः दत्वा स्विष्टकृदादिप्रायश्चित्तांतं हुत्वा अमृताऽपिधानमसीति उत्तरापोशनं दत्वा नैवेद्यं विसर्जयेत् ॥ अथ हस्तप्रक्षालनं मुखप्रक्षालनं मूलेन दत्वा ॥ चंदनं च सकर्पूरं कस्तूर्यादिसमन्वितं ॥ करोद्वर्तनकं देव प्रीत्यर्थं प्रतिगृह्यतामिति ॥ करोद्वर्तनं समर्प-

येत् ॥ विष्वक्सेनाय शतांशं दत्वा । नैवेद्यशेषं विष्वक्सेनाधीनं
कृत्वा देवस्य वामभागे स्थापयित्वा तत्स्थलं मूलमंत्रेण प्रक्षा-
लयेत् ॥ भो देव सिंहासनमागच्छेति विज्ञाप्य मूलेन त्रिवारं तु-
लसीदलं समर्पयेत् ॥ पूगीफलसमायुक्तं तांबूलं प्रतिगृह्यतां ॥
नाभ्यामासीदंतरिक्षं० तांबूलं समर्पयामि । हिरंण्यरूपः सहिरं-
ण्यसंदृगपान्नपात्सेदु हिरंण्यवर्णः । हिरण्ययात्परियोनेर्निषद्या-
हिरण्यदादंदत्यन्नंमस्मै इति सुवर्णपुष्पं ॥ जयत्यजोऽखंड इति
पुनर्धूपं दत्वा उपचारेषु मध्ये हस्तं प्रक्षाल्य अर्चितप्रार्चितेत्या-
दिमंत्रैः गोघृताक्तवर्तिकाभिः तिलतैलाक्ताभिर्वा दीपसंयुक्तादि-
भिः चतुरष्टांगुलोत्सेधे आपादतलमस्तकं त्रिः भ्रामयेत् देवस्य
वामभागे विसर्जयेत् ॥ इति कर्पूरनीराजनानि च कृत्वा मध्ये मध्ये

श्रीतुलसीं द्विस्त्रिर्वा समर्प्य मंत्रपुष्पं मूलेन नमो महद्भ्य इत्यादि-मंत्रैः समर्पयेत् ॥ ततः शुद्धोदकेन शंखं प्रपूर्य तुलसीं स्थापयित्वा मुद्राः प्रदर्श्य मूलेनाष्टवारं अभिमंत्र्य । इमाआपः शिवतमा इमा सर्वस्य भेषजीः। इमाराष्ट्रस्य वर्धनीरिमाराष्ट्रभृतोमृताः॥ इमाआपः शिवाः शुद्धाः शीतलाः संतु पूताः सूर्यस्य रश्मिभिरिति देवस्य पादादिमुकुटपर्यंतं एकवारं देवस्य नाभ्यादिमुकुटपर्यंतं द्वितीयवारं तथा देवस्य हृदयादिमुकुटपर्यंतं तृतीयवारं प्रदक्षिणेन भ्रामयित्वा पात्रांतरे स्थापयेत् ॥ आरोपयेत्ततो वन्हिं हृत्पद्मे मूलमंत्रतः ॥ प्रताप्य दक्षिणं हस्तं मुखेनाकृष्य वायुना ॥ ततो रमाब्रह्मादिसनकादिहरिभक्तपूजा । विष्णोस्तु पुरतो नैव ह्यन्यस्य प्रतिमां पूजयेत् ॥ वर्जयित्वा हनूमंतं शेषं गरुडमेव च ॥ वि-

ष्वक्सेनस्य गरुडब्रह्मादीनां विशेषतः ॥ मम तीर्थादिकं सर्वं नैवेद्यं च समर्पयेदिति पाद्मे ॥ तत्र रमायाः विष्वक्सेनहरिभक्तानां च पात्रांतरे आवाह्य तीर्थांतरे पूजनं बोध्यं ॥ रमाब्रह्मादयो देवाः सनकाद्याः शुकादयः ॥ श्रीनृसिंहप्रसादोऽयं सर्वे गृह्णंतु वैष्णवाः ॥ अर्हं रुद्रेभिः बळित्थेत्यादि पठेत् ॥ स्तोत्रपाठादिपूर्वकं प्रदक्षिणानमस्कारान्कृत्वा पूजाषाड्गुण्यार्थं अष्टोत्तरशतं मूलमंत्रं जप्त्वा देवे तत्त्वन्यासमातृकान्यासाष्टाक्षरन्यासपंचांगन्यासान् कृत्वा ॥ आत्मा देवानां यज्ञेन यज्ञमिति मंत्रेण उद्यद्भास्वदिति ध्यात्वा आवाहनादिमुद्राव्यत्यासे निधाय एह्येहीति स्वहृदये पुनरावाहयामीति पुनः स्वहृदये स्थापयेत् ॥ याचेऽहं त्वं हृषीकेश नमामि पुरुषोत्तम ॥ हृदये कुरु संवासं श्रिया सह ज-

गत्पते ॥ इति प्रार्थयेत् ॥ परदेवपूजायां रव्यादिमंडले विसृजेत् ॥ नाहं कर्ता हरिः कर्ता तत्पूजाकर्म चाखिलं ॥ तथापि मत्कृता पूजा त्वत्प्रसादेन नान्यथा ॥ न जाने कर्म यत्किंचिन्नापि लौकिकवादिके ॥ मंत्रतस्तंत्रतश्छिद्रं देशकालार्हवस्तुतः ॥ सर्वं करोति निश्छिद्रमनुसंकीर्तनं तव ॥ त्वद्भक्त्या सफलं मह्यं त्वत्प्रसादः पुनःपुनः ॥ कर्मन्यासो हरेरेवं विभोस्तृप्तिकरः सदा ॥ मादृशो न परः पापी त्वादृशो न दयापरः ॥ दासोऽयमिति मां मत्वा क्षमस्व पुरुषोत्तम ॥ रक्षतीत्येव विश्वासस्तदीयोऽहमिति स्मृतिः ॥ शरणागतिरेषा स्याद्विष्णोर्मोक्षफलप्रदा । स्थितिः सेवा गतिर्यात्रा स्मृतिश्चिंता स्तुतिर्वचः ॥ अहो सर्वात्मको विष्णुः सुधियां सर्वदान्वयः ॥ इति संप्रार्थ्य ॥ यस्य स्मृ-

त्याचेति विष्णौ समर्पयेत् ॥ भरद्वाजसंहितायां ॥ शंखमध्ये स्थितं तोयं भ्रामितं केशवोपरि ॥ अंगलग्नं मनुष्याणां ब्रह्महत्यायुतं दहेत् ॥ भरद्वाजसंहितायां ॥ वस्त्रं तु त्रिगुणीकृत्य तत्र-पाणिं निधाय च ॥ पाणौ पाणिं विधाय त्रिस्तुलसीमिश्रितं पिबेत् ॥ एकादश्यामेकवारं तीर्थं तु तुलसीं विना ॥ आदौ धृत्वा ततः पीत्वा पुनः शिरसि धारयेत् ॥ शालग्रामजलं पीत्वा कोटियज्ञफलं लभेत् ॥ तस्मादष्टगुणं पापं भूमौ तद्बिंदुपातनात् ॥ निर्माल्यं नाभिशिरसोः कर्णयोर्धारयेत्सुधीः ॥ इति देवपूजाविधिः ॥ अथ वैश्वदेवः ॥ तथा च पराशरः ॥ अकृत्वा वैश्वदेवं तु योऽन्नं भुङ्क्ते द्विजाधमः[1] ॥ स भुङ्क्ते हि कृमीन्सर्वान् का-

---

१ द्विजोत्तम इत्यन्यत्र पुस्तके ॥

कयोनिषु जायते ॥ यदि स्याल्लौकिके पाकस्तत्रैवाग्नौ प्रहूयते ॥ गृह्याग्नौ पचने चेत्स्याद्धोमं तत्रैव चाचरेदिति च ॥ यस्मिन्नग्नौ पचेदन्नं तस्मिन्होमं समाचरेत् ॥ वैश्वदेवे तु सर्वान्नं पवित्रं लवणं विना ॥ दत्वा विष्ण्वाहुतीः पूर्वं मंत्रैरष्टाक्षरादिभिः ॥ वैश्वदेवं प्रकुर्वीत अन्यथा किल्बिषी भवेत् ॥ व्यासः ॥ वैश्वदेवं प्रकुर्वीत स्वशाखाविहितं द्विजः ॥ जुहुयात्सर्पिषाभ्यक्तं तैलक्षारविवर्जितं ॥ दध्यक्तं पयसाभ्यक्तं तदभावेऽम्बुनापि वा ॥ पयोदधिघृतैर्वापि वैश्वदेवं स्रुवेण तु ॥ हस्तेनान्नादिकं कुर्याज्जलैरंजलिना जलैरिति ॥ तच्छेषेऽपां बलिं दद्याद्वारिणा प्लावितेन हि ॥ विना च कोद्रवं माषं चणकं च कुलित्थकमिति ॥ उत्तानेन तु हस्तेन ह्यंगुष्ठाग्रयुतेन च ॥ संहतांगुलिपाणिस्तु वा-

ग्यतो जुहुयाद्धविरिति ॥ यत्किंचिज्जुहुयादग्नौ तत्सर्वं त्यागपूर्वकं ॥ स्मरन्नग्निगतं रामं तत्तद्देवं सनामकं ॥ अविभक्ता विभक्ता वा पृथक्पाकं द्विजातयः ॥ कुर्युः पृथक्पृथग्यज्ञं भोजनात्प्राक् दिनेदिने । विभक्तानां तु पाकैक्ये ज्येष्ठ एव समाचरेत् ॥ पुत्रो भ्राता तथा शिष्य ऋत्विक्श्वशुरमातुलाः ॥ पत्नी वा श्रोत्रियो ज्ञातिर्वैश्वदेवादिकर्मिणः ॥ व्रीह्याद्यनेकद्रव्यस्य पाकश्चेदेककालतः ॥ तदा पाकैकद्रव्यस्य वैश्वदेवादिके कृते ॥ सर्वस्यापि कृतं तत्स्यान्न पृथग्वैश्वदेवकं ॥ अन्यस्यैकस्वामिकस्य वैश्वदेवे कृते सति ॥ अन्नस्यापि हि सर्वस्य कृतं स्याद्वैश्वदेवकमिति ॥ पूर्वं तस्य कृता देवा वैश्वदेवादिकर्मिणः ॥ उत्तरस्यापि सर्वस्य कृतं स्याद्वैश्वदेवकं ॥ वैश्वदेवं दिवा नित्यं प्रकुर्वन् भक्ति-

संयुतः ॥ रात्रौ होमं प्रकुर्वीत ये भूता मंत्रतो बलिं ॥ नान्यद्ब-
लिहृतं रात्रौ यद्वा कुर्यादमंत्रत इति ॥ रात्रौ होमं वैश्वदेवहोमं
यथास्थितमंत्रैः प्रकुर्वीत ॥ बलिं बलिहरणं तु ये भूताः प्रचरं-
तीति मंत्रेणैव । अन्यद्बलिहृतिं अन्यदेवतामंत्रेण बलिहरणमि-
त्यर्थः ॥ वैश्वदेवं यदा कुर्यात्स्वान्यो विप्रादिकस्तदा ॥ अन्नसं-
स्कारमात्रार्थं न कुर्याद्बलिकर्मत्विति ॥ मृत्युरोगविनाशार्थं नि-
राकारं बलिं हरेत् ॥ व्यजनाकारमथवा बलिं विप्रो हरेद्ध्रुवं ॥
आयुरारोग्यसौभाग्यपुत्रविद्यापशून्प्रति ॥ कामी श्चाधर्ममोक्षार्थं
चक्राकारं बलिं हरेत् ॥ चक्राकारमथाष्टारं कुर्यादग्निसमीपतः ॥
बदरीफलमात्रं तु घृतक्षीरादिमिश्रितं ॥ अन्नं क्षिपेद्द्विजश्रेष्ठो
भूमौ तद्बलिसंज्ञकं ॥ पूर्वां तु दिशमारभ्य चेशानावधिकं स्मृ-

तं ॥ दिवा भूमौ बलिं दद्याद्रात्रौ दद्याच्च पात्रके ॥ हुतकारम-
थाग्नौ वा भिक्षां वा पुष्कलां द्विजः ॥ दद्याददतिथये नित्यं तत्स्थं
ज्ञात्वा हरिं परं ॥ ग्रासमात्रं भवेद्भिक्षा पुष्कलं तच्चतुर्गुणं ॥
चातुर्गुणे हंतकारो ह्यग्रतस्त्रिगुणं भवेत् ॥ नैवेद्यकरणे निषिद्ध-
काष्ठान्याह ॥ अमेध्यगंधकाष्ठानि निषिद्धानि तु यानि च ॥ अं-
तःप्राण्युपपन्नानि तानि सर्वाणि वर्जयेत् ॥ गव्यं पुरीषं शुष्कं
तु शुद्धमग्नौ प्रदाहयेत् ॥ तुलसीं विना वन्यकाष्ठैर्द्विजो वन्हिं
प्रदीपयेत् ॥ व्यजनेन धमन्या वा सांतरेण मुखेन चेति ॥ एवं
श्वकाकादिबलिं दद्यात् ॥ अथ भोजनं ॥ तदुक्तमाचार्यैः ॥ भु-
क्तशेषं भगवतो भृत्यातिथिपुरःसरः ॥ भुंजीत हृद्गतं विष्णुं स्म-

रन् तद्गतमानसः ॥ भृत्यः प्रेष्यः पितृमातृशिष्यपुत्रादिः ॥ अ-
तिथिः ॥ अध्वश्रांतो ह्यविज्ञातः क्षुत्पिपासायुतस्तथा ॥ हरि-
भक्तो वैश्वदेवे अकस्मादागतस्तु यः ॥ अतिथिं तं विजानीया-
न्नातिथिः पूर्वमागतः इति स्मृत्युक्तो ज्ञेयः ॥ पुरःसरशब्देन
अभ्यागतो ज्ञेयः ॥ भृत्यादीनां तेषां पूर्वभोजनं स्वापेक्षया सं-
भवात् ॥ हृद्गतं भृत्याद्यंतर्यामिणं विष्णुं स्वस्य च स्मरन्नित्यर्थः ॥
हारीतः ॥ बालवृद्धसुहृद्बंधून् भृत्यारूयान् तदनंतरं ॥ भोजयेच्च
यथाशक्ति यथाकालं क्षुधान्वितानिति ॥ पाषंडी पतितो वाऽपि
क्षुधार्तो गृहमागतः ॥ नैव दद्यात्सुपक्वान्नं ग्रासमेकं प्रदापये-
त् ॥ अकृते वैश्वदेवे तु भिक्षुको गृहमागतः ॥ उद्धृत्य वैश्वदे-

१ पौष्य इत्यन्यत्र ॥

वार्थं भिक्षां दद्यान्निवेदयेत् ॥ वैश्वदेवाकृतं दोषं शक्तो भिक्षु-
र्व्यपोहितुं ॥ यतिहस्ते जलं दद्याद्भैक्षं दद्यात्पुनर्जलं ॥ तदन्नं
मेरुणा तुल्यं तज्जलं सागरोपमं ॥ प्रतिमायामर्पितं तु नार्पये-
त्प्रतिमांतरे ॥ अग्निविप्राद्यधिष्ठाने ह्यर्पयेद्विष्णवनुज्ञया ॥ प्र-
त्यङ्मुखः प्राङ्मुखो वा जान्वोरंतःकरस्तथा ॥ शुभे दारुमये
पीठे समासीनः कुशांतरे ॥ अलाभे शुभपीठस्य केवलं कुश-
विष्टरे ॥ भोजनपात्रस्याधोमंडलमाह ॥ शंखः ॥ आदित्या व-
सवो रुद्रा ब्रह्मा चैव पितामहः ॥ मंडलान्युपजीवंति तस्मात्कु-
र्वीत मंडलं ॥ चतुरस्त्रं त्रिकोणं च वर्तुलं चार्धचंद्रकं ॥ वर्णानां
ब्राह्मणादीनां मंडलानि यथाक्रमं ॥ स्वयं न मंडलं कुर्यात्
स्वार्थमन्येन कारयेत् ॥ सुवर्णादिमयं पात्रं विशुद्धं कांस्यमेव

च ॥ चतुःषष्टिपलं चैव कांस्यं मुख्यं प्रमाणतः ॥ तदर्धं वाथ-
पादं वा ततो हीनं विवर्जयेत् ॥ तदभावे तु भुंजीत शुभे पर्ण-
मये द्विजः ॥ मधुकं कुटजं ब्राह्मं जंबु प्लक्षमुदुंबरं ॥ कदलीप-
र्णकं चैव पालाशं पनसं तथा ॥ श्रीपर्णं मातुलिंगं च शुभानी-
मानि भोजने इति ॥ वटार्काश्वत्थपर्णानि निषिद्धानि ॥ वटा-
र्काश्वत्थपर्णेषु यतिर्भुक्त्वा न दोषभाक् ॥ रंभापत्रपलाशेषु यो
भुंक्ते द्वादशीदिने ॥ सप्तजन्मार्जितं पुण्यं तत्क्षणादेव नश्यति ॥
मार्जनं चार्चनं चैव बलिकर्म च भोजनं ॥ देवतीर्थेन वै कुर्या-
त्प्राङ्मुखश्चासने स्थितः ॥ पादाभ्यां धरणीं स्पृष्ट्वा पादेनैकेन
वा पुनरिति ॥ अथ परिवेषणं ॥ पात्रेषु अभिघार्य ॥ स्वयं वा
स्त्रीजनो वाऽपि परिवेषणमाचरेत् ॥ आदौ तु लवणं ज्ञेयं व्यंज-

नादि ततः परं ॥ शाकादिकं ततः सूपमन्नं पायसमेव च ॥ भ-
क्ष्यादिकं ततश्चांते घृतं तु परिवेषयेत् ॥ भोक्तुर्दक्षिणतो भक्ष्यं
वामभागे तु पायसं ॥ परितो व्यंजनादीनि मध्येऽन्नं परिवेष-
येत् ॥ ओदने परमान्ने च सूपे चैव सुमुग्धधीः ॥ घृतेन पूर-
येत्पात्रं तद्घृतं रुधिरं भवेत् ॥ आयसेन तु पात्रेण न किंचित्प-
रिवेषयेत् ॥ कांस्यपित्तलपात्रेण चान्नाद्यं परिवेषयेत् ॥ अपक्कं
तैलपक्कं च हस्तेनैव प्रदीयते ॥ उदकं चैव पक्कान्नं नो दद्याच्च
कदाचन ॥ लवणं पायसं भक्ष्यं घृतं च व्यंजनादिकं ॥ हस्त-
दत्तं न गृह्णीयात् गोमांसाशनवत्स्मृतं ॥ अन्नं दृष्ट्वा प्रणम्यादौ
प्रांजलिः कथयेत्ततः ॥ अस्माकं नित्यमस्त्वेतदिति भक्त्याद्वि-
जोत्तम इति ब्रह्मांडपुराणे ॥ परिवेषणानंतरं गंधाक्षततीर्थादि-

भिः पूजितानामतिथ्यादीनामन्नदानं कृत्वा एको विष्णुरिति विष्णौ समर्प्य ॥ स्वयं गंधाक्षतादिभिरलंकृत्य ॥ तीर्थादिकं गृहीत्वा प्राणाग्निहोत्रसंकल्पं कुर्यात् ॥ तत्रायं प्रकारः ॥ प्राणानायम्य प्राणाग्निहोत्रं करिष्य इति संकल्प ॥ हृदयं गार्हपत्यः मनो दक्षिणाग्निः आस्यमाहवनायः ॥ इत्यऽनुसंधाय । संकर्षणश्च प्रद्युम्नस्तत्र भोक्तृषु संस्थितः ॥ भोक्तृशक्तिप्रदातारौ भोक्तारौ च विशेषतः ॥ नारायणानिरुद्धौ तु भोज्यवस्तुषु संस्थितौ ॥ तर्पकौ सर्वजीवानां तस्माद्भोज्यौ न चर्व्यतः ॥ अवकाशप्रदो नित्यं वासुदेवो नभःस्थितः ॥ एवं पंचात्मकं विष्णुं य उपास्ते सदैव हि ॥ भोक्ता चाप्यायकश्चैव तस्य विष्णुः प्रसीदति ॥ नैवेद्यशेषं तुलसीविमिश्रितं विशेषतः पादजलेन सिक्तं ॥ यो-

श्नाति नित्यं पुरतो मुरारेः प्राप्नोति यज्ञायुतकोटिपुण्यं ॥ द्वा-
विमौ पुरुषौ लोके इत्यादिकमुक्त्वा गायत्र्या तुलसीसहिततीर्थे-
नान्नादिकं प्रोक्ष्य गायत्र्याष्टाक्षरादिमंत्रैरभिमंत्र्य परिषेचयेत्
दिवा सत्यंत्वर्त्तेन परिषिंचामीति वदेत् ॥ रात्रौ ऋतं त्वा सत्येने-
त्युक्त्वापोशनमाचरेत् ॥ प्राणस्य वस्त्रबुद्धया तु भोजनोभयतः
पिबन् ॥ स्वर्गे मुक्तौ तथा दिव्यवस्त्रलाभी भवत्यलमित्यनुसंधा-
य । अमृतोपस्तरणमसीति मंत्रेण श्रीतुलसीसहितं शालग्राम-
तीर्थं पिबेत् ॥ मंत्रार्थस्तु । हे अमृत अमृततुल्य तीर्थ पादोदक
त्वं मुख्यप्राणस्य उपस्तरणं परिधानवस्त्रमसि भवसीति । त-
त्र विशेषः ॥ आपोशनजलं विप्रः पुनः पूरयते करे ॥ सशब्दं
वाऽपिबेद्यस्तु श्वमूत्रेण समं स्मृतं ॥ स्वाहांताः प्रणवाद्याश्च

प्राणाद्याहुतिमंत्रकाः ॥ प्राणापानादिरूपाश्च चतुर्थ्यंताः प्रकीर्तिताः ॥ अनिरुद्धादिदेवेभ्यो नममेति वदन् बुधः ॥ जिह्वयैव ग्रसेदन्नं दशनैर्नैव संस्पृशेदिति ॥ हरिं ध्यायन् द्विजोऽश्नीयात्पूर्वं हि मधुरं रसं ॥ लवणाम्लौ तथा मध्ये कटुतिक्तादि चांततः ॥ प्राग्द्रवं पुरुषोऽश्नीयान्मध्ये तु कठिणाशनं ॥ अंत्ये पुनर्द्रवाशी स्याद्बलारोग्ययुतो भवेत् ॥ जठरं पूरयेदर्धं अर्धभागं जलेन च ॥ पूरयेदर्धभागं तु भक्ष्यादिभिरतंद्रितः ॥ वायुसंचारणार्थाय चतुर्थमवशेषयेदिति ब्रह्मांडे ॥ हस्ते चायतग्रासः सन् चिंतयेन्मधुसूदनं ॥ नासनारूढपादस्तु न वेष्टितशिरास्तथा प्रलपंश्च हसन्नेव बहिर्जानुकरेण च ॥ नारोप्य हस्तं भुंजीत

१ ददेदिति वा पाठः ॥

पादयोश्च तथा भुवि ॥ नावसारितपादश्च नोत्संगकृतभोजनः ॥
नाश्नीयाद्भार्यया साकं शिशुभिर्न विचक्षणः ॥ न शयानो ना-
तिसंगो न विमुक्तशिरोरुहः ॥ नाम्लप्रधानं विकिरन् न भुंजी-
तातिकांक्षया ॥ नातिशब्देन भुंजीत न वस्त्रार्धोत्तरीयवान् ॥
प्रगृह्य पात्रं हस्तेन भुंजीयाद्विजसत्तमः ॥ ग्रासशेषं न चा-
श्नीयात्पीतशेषं पिबेन्न तु ॥ पात्रांतरेण वा द्रोणैः पिबेत्तोयं द्वि-
जोत्तमः ॥ ॥ उद्धृत्य वामहस्तेन न वासांतरितस्तथा ॥ न पिबे-
त्तज्जलं पीत्वा सुरापानी भवेद्धि सः ॥ स्थापयेज्जलपात्रं तु द-
क्षिणे वामतो न तु ॥ मुखमाच्छाद्य वस्त्रेण पात्रेण न जलं पि-
बेत् ॥ प्रत्यक्षं लवणं भुक्तं क्षीरं च लवणान्वितं ॥ दधि हस्तेन
मथितं सुरया तत्समं स्मृतं ॥ नोच्छिष्टो घृतमादद्यात्पुरोडाशं

च माक्षिकं ॥ अपूपं पायसं मांसं यावकं कृसरं मधु ॥ केवलं यो वृथाश्नाति तेन भुक्तं सुरासमं ॥ अनर्पितं च यद्विष्णौ यो भुङ्क्ते स्तेन एव सः ॥ तस्मात्सर्वं तु विमलं विष्णोरर्पितमेव हि ॥ सपवित्रेण यो भुंक्ते सर्वयज्ञफलं लभेत् ॥ भुक्त्वैव तु द्विजस्तृप्त्यै प्राशयेदंबु निर्मलं । किंचिदन्नमुपादाय उत्तरापोशनं चरेत् ॥ मुख्यप्राणस्योत्तरीयं वस्त्रं ध्यात्वा जलं पिबेत् ॥ अमृतापिधानमसीत्येवं हि कुशपाणिना ॥ पैतृकेण तु तीर्थेन भूमौ दद्यात्तदर्थिनां ॥ पीतशेषं जलं चान्नं रौरवे इति मंत्रतः ॥ गंडूषद्वितयं कृत्वा क्षालयेच्च ततः करौ ॥ मृदा हस्तौ शोधयित्वा दंतांश्चैव तृणादिना ॥ हस्तौ च कूर्परौ पादौ आजानु क्षालयेत्ततः ॥ कृत्वा द्वादश गंडूषान् त्रिराचम्य विशुद्ध्यति ॥ आचम्यैवं द्विजश्रेष्ठो ह-

स्तांगुष्ठजलं क्षिपेत् ॥ दक्षिणस्य तु पादस्य ह्यंगुष्ठे[1] सुसमा-
हितः ॥ सर्वेषामेव यागानां आत्मयागः प्रकीर्तितः ॥ योनेन
विधिना कुर्यात् स याति ब्रह्मणः पदमिति ॥ आचांतोऽप्यशु-
चिस्तावद्यावत्पात्रमनुद्धृतं ॥ उद्धृतेऽप्यशुचिस्तावद्यावन्नो लिप्यते
मही ॥ भोजनानंतरं तीर्थं पीत्वा सतुलसीदलं ॥ मूलमंत्रेणा-
भिमंत्र्य स्वोदरं वेदशास्त्रतः ॥ अहःशेषं नयेत्संध्यामुपासी-
ताथ पूर्ववत् ॥ प्रदक्षिणनमस्कारान्कृत्वोपासनमाचरेत् ॥ नृत्य-
गीतपुराणादि श्रवणं कारयेत्सुधीरिति ब्राह्मे ॥ सायं संध्यामु-
पास्यैवं हुत्वा भृत्यादिभिर्वृतः ॥ औपासनक्रियां कृत्वा अश्नी-
यादन्वहं द्विजः ॥ सायमप्यतिथिः पूज्यो होमकालागतो द्विजः ॥

१ त्र्यंगुले इति चान्यतः ॥

एवमतिथीन् भोजयित्वा स्वयं भुक्त्वा शुचिराचम्य तांबूलग्रहणप्रकारमाह ॥ एकपूगं महारोग्यं द्विपूगं निष्फलं भवेत् ॥ अतिश्रेष्ठं त्रिपूगं च ह्यधिकं दोषकृन्न च ॥ पर्णमूलाद्भवेद्व्याधिः पर्णाग्रात्पापसंभवः ॥ चूर्णपर्णं हरेदायुः शिरा बुद्धिविनाशिनी ॥ तस्मादग्रं च मूलं च शिरां चैव द्विपर्णकं ॥ चूर्णपर्णं वर्जयित्वा तांबूलं खादयेद्बुधः ॥ इति ॥ अथ शयनम् ॥ यामात्परत एवाथ स्वपेद्ध्यायञ्जनार्दनं ॥ अंतराले ततो बुद्ध्वा स्मरेत बहुशो हरिं। द्विजः शयीत रात्रौ हि दक्षिणः प्राक्शिरास्तथा ॥ प्रत्यक्शिराः प्रवासे तु स्वगृहे प्राक्शिरास्तथा ॥ श्वशुरगृहे दक्षिणतः न कदाचिदुदक्शिरा इति ॥ अत्र विशेषमाह ॥ महादेवगृहे मार्गे भूतवेश्मनि न स्वपेत् ॥ मान्यगोविप्रदेवानां गुरूणां च तथा-

गृहे ॥ न चाऽपि भग्नशयने नाशुचौ नाशुचिस्तथा ॥ प्रचेताः ॥
न च देवसमीपे तु न संध्यायां दिवा द्विज इति ॥ निद्रासमयमा-
साद्य तांबूलं वदनात्त्यजेत् ॥ पुष्पाणि मस्तकाच्चैव ह्यन्यथा दो-
षवान्भवेत् ॥ रात्रौ स्त्रीसंगविशेषमाह ॥ मनुः ॥ ऋतुः स्वाभा-
विकः स्त्रीणां रात्रयः षोडश स्मृताः ॥ तासामाद्यास्त्रयो वर्ज्या
वर्ज्या एकादशी च या ॥ त्रयोदशी च शेषाः स्युः प्रशस्ता द-
श रात्रयः ॥ स्नानं चतुर्थे दिवसे रात्रौ गच्छेद्विचक्षण इति ॥
युग्मासु पुत्रा जायंते कन्यास्तु विषमासु चेति भारते ॥ तत्रायं
प्रकारः ॥ दशम्यादिपुण्यकालवर्जितसमदिवसे स्त्रीसंगं कुर्वन्
पुरुषः अर्धरात्रं अपररात्रं दिवा संध्याकालं च त्यक्त्वा रात्रि-
प्रथमयामानंतरं पादौ प्रक्षाल्य आचमनं कृत्वा वामदेवयज्ञं क-

रिष्ये इति संकल्प्य । आत्मपत्न्यां भारत्यंतर्गतलक्ष्मीमनुसंधाय स्वस्मिन्मुख्यप्राणांतर्गतं विष्णुं स्मृत्वा तयोः स्वपत्नीरमणकर्तृत्वं च ध्यात्वा विष्णुर्योनिमित्यादिमंत्रान्पठित्वा मुखे मुखं लापयित्वा स्त्रीसंगं कुर्यात् ॥ पश्चान्मूत्रपुरीषवन्मृत्तिकाशौचादिकं कृत्वा पादप्रक्षालनानंतरं षोडश गंडूषान्कृत्वा त्रिराचम्य यस्य स्मृत्येत्यनेन वामदेवयज्ञेन आत्मांतर्यामिमुख्यप्राणांतर्गतविष्णुः प्रीयतामिति समर्पयेत् ॥ ऋतुकाले स्त्रीसंगानंतरं ॥ ऋतौ तु गर्भं शंकित्वा स्नानं मैथुनवत्स्मृतमित्युक्तस्नानस्य रात्रावसंभवात् पूर्वोक्तमंत्रस्नानं वा कार्यं ॥ बृहदारण्यकोपनिषदि अंतिमब्राह्मणे तु वामदेवयज्ञानुसंधाने प्रकार उक्तः ॥ तत्र चायं खंडः ॥ तेनैनामन्वसृजत्तस्या वेदिरुपस्था लोमानि बर्हिः चर्माधिषवणे समिधौ म-

ध्यतःस्थौ मुष्कौ धिषणे स यावान् हवै वाजपेयेन यजमानस्य लो-
कों भवति तावांस्तस्य लोको भवति ॥ य एवं विद्वान् अंधो-
पहासं चरंत्यस्य स्त्रियः सुकृतमावृजंते इति अस्यार्थः ॥ श्रीरघूत्त-
मस्वामिभिः कृतः ॥ कामतः प्राप्तस्यापि मिथुनीभावस्य यज्ञ-
त्वभावनया वाजपेयफलप्राप्तिरिति भावेन अत्रापि वेद्यादिक-
माह ॥ तेनैनामिति ॥ तेन महाफलस्य विद्यमानत्वेन तेन य-
ज्ञत्वानुसंधानेन तेन रेतसा एनां स्वस्त्रियं अन्वासृजेत् संयोज-
येत् अद्यतनोऽपि पुरुष इति शेषः ॥ तस्याः स्त्रियः उपस्था
वेदिः रोमाणि तद्वर्तीनि बर्हिः तद्वर्ति चर्मैव चर्म कृष्णाजिनस्था-
नीयं ॥ यो मध्यतो मध्यदेशे विद्यमानौ मुष्कौ वृषणौ तौ अधि-
षवणे सोमाधिकफलके इत्यर्थः ॥ मध्यतः योनिमध्यदेशे स-

मिद्धः दीप्तोऽग्निः तस्मिन्नग्नौ रेतो जुहुयादिति भावः ॥ उक्तप्रका-
रेण मिथुनीभावस्य यज्ञभावेन कर्तुः फलमाह ॥ स इति ॥ वा-
जपेयेन यजमानस्य सः प्रसिद्धो यावाँल्लोकोऽस्योक्तप्रकारेण
मिथुनीभावेन सक्तस्य भवति ॥ वाजपेयेन यजमानः परलोके
यावत्सुखं तावत्सुखमनेनाऽपि स्यादिति भावः ॥ फलांतरमाह ॥
य एवमिति ॥ यः पुरुषः एवमुक्तप्रकारेण मिथुनीभावस्य य-
ज्ञत्वं विद्वान् अंधोपहासं चरति अस्य पुरुषस्य सुकृतं स्त्रियः
आवृजंते प्रापयंतीत्यर्थः ॥ तद्भाष्ये रेतोभिमाना सरस्वतीत्युक्तं ॥
ऐतरेये तु आदित्योऽभिमानीत्युक्तं ॥ ऐतरेयभाष्यं । स्त्रीषु यल्लो-
हितं लोके तत्राग्निस्थो जनार्दनः ॥ स्त्रीरूपः सोऽग्निनामेव ज्व-
लज्ज्वालसमप्रभः ॥ तस्माद्विष्णोः संनिधानाद्भर्त्ता भार्या-

शरीरगात् ॥ न बिभित्सेतैव रक्तात्तथा पुंरेतसि स्थितः ॥ आदित्यसंस्थो विष्णुः सः आदेशादित्यनामकः ॥ तस्मान्न रेतसो भार्या बिभित्सेत्तपसि स्थितात् । पुरुषो भगवान्विष्णू रेतसिस्थो द्युमत्प्रभुरिति ॥ छांदोग्ये उपमंत्रयते स हिंकारः ज्ञापयते प्रस्तावः । स्त्रिया सह शेते स उद्गीथः ॥ प्रतिस्त्रीसह शेते स प्रतिहारः ॥ कालं तन्निधनं पारं गच्छति तन्निधानं ॥ एतद्वामदे[1]व्यं मिथुने प्रोक्तं ॥ एतद्भाष्ये । मिथुनस्य पंचरूपत्वं ध्यात्वैव पुरुषोत्तमं ॥ अत्यागी च स्वभार्याणां मुच्यते नात्र संशय इति ॥ योनिक्लृप्तिर्वासुदेवाद्रूपं संकर्षणाद्भवेत्[2] ॥ आसेककर्म प्रद्युम्नादनिरुद्धाच्च धारणमित्ययं श्लोकः ॥ विष्णुर्योनिं क-

---

१ एतद्वामदेवयज्ञंमिथुनेप्रोक्तमितिपुस्तकांतरे, मिथुनीप्रोक्तमित्यपि २ संकर्षणाभिधादित्यपरेषु ॥

ल्पयत्वित्यस्य व्याख्यानरूपः ॥ इतः पूर्वस्तु हिंकारादिवाच्य अनिरुद्धादिप्रतिपादक इत्यऽनुसंधानं ॥ स्त्रीसंगकाल इत्यऽनुसंधानं कृतं चेद्यज्ञफलं भवति ॥ इति स्त्रीसंगप्रकरणं ॥ अत्रकश्चिद्विशेषः आचार्यैरुक्तः ॥ एष नित्यः सदाचारो गृहिणो वनिनस्तथा ॥ वैश्वदेवं बलिं दंतधावनं चाप्यृते बटोः ॥ समिद्धोमो बटोस्तु स्यात् स्मृत्वा विष्णुं हुताशने ॥ इति गृहिणः गृहस्थस्य वनिनः वानप्रस्थस्य । बलिं बलिहरणं । सायं प्रातर्भिक्षाशनगुरुकुलवासादयो अन्ये विशेषाः स्मृतिपुराणादावुक्ता ज्ञेयाः ॥ एवं संन्यासिनामपि विशेषाचाराः भगवत्पादाचार्यकृतसदाचारस्मृत्युक्ता ज्ञेयाः ॥ एवं प्रतिपादनं क्रियमाणं कर्म विष्णवे समर्पयेत् ॥ तदुक्तमाचार्यैः ॥ कायेनवाचेति ॥ इष्टं दत्तं हुतं

जप्तं पूर्तं यच्चात्मनः प्रियं ॥ दारान् सुतान् प्रियान् प्राणान् परस्मै संनिवेदयेत् ॥ इति सर्वस्मिन्नपि कर्मणि हरिस्मरणे कृते पूर्तिः नान्यथा ॥ मंत्रतस्तंत्रतश्छिद्रं देशकालार्हवस्तुतः ॥ सर्वं करोति निश्छिद्रमनुसंकीर्तनं तवेति वामनं प्रति शुक्राचार्योक्तेः ॥ स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् ॥ सर्वे विधिनिषेधाः स्युरेतयोरेव किंकराः ॥ इति श्रीमदानंदतीर्थाचार्योक्तेश्च ॥ छलारिनरासिंहेन कृते स्मृत्यर्थसागरे ॥ स्यादान्हिकतरंगोऽयं श्रीमध्वपतितुष्टिदः ॥ ॥ इति श्रीमच्छलारिनरसिंहाचार्यकृतान्हिकतरंगः समाप्तः ॥ ॥ श्रीकृष्णार्पणमस्तु ॥



श्रीवेदव्यासाय नमः ॥ खननात्पूरणाद्दाहादभिषेचनलेप-
नात् ॥ गोभिराक्रमणात्कालाद्भूमिः शुध्यति सप्तधेति ॥ लेप-
नात् गोमयलेपनात् कालात् यावताकालेनामेध्यादिगंधलेपक्षयो
भवति स काल इत्युच्यते ॥ भूमिदुष्टनिमित्तानि तु देवलोक्तानि ॥
यत्र प्रसूयते नारी म्रियते दह्यते तथा ॥ चंडालाध्युषितं यत्र यत्र
मूत्रादिसंगतिः दुष्टा भूमिस्त्रिधा द्वेधा शुद्ध्यते मलिनैकधेति ॥
॥ अस्यार्थः ॥ सेत्यध्याहारः ॥ प्रसवमरणशवदहनैर्दुष्टा भूमिः
खननपूरणलेपनैर्वा गोक्रमणादिभिः त्रिभिर्वाशुद्ध्यति ॥ सकृ-
च्चंडालादिसंबंधे द्वेधा ॥ अभिषेचनल्लेपनाभ्यां मूत्रादिसंबंधे
एकधा गोमयलेपनेन तथा मलिना च या श्वादिभिर्युक्तसेचना-
दिना शुद्ध्यतीति ॥ एवं भूमिरिव अन्येऽप्यशुद्धिनिमित्तेषु य-

थायोग्यं चतुर्धा पंचधाऽपि शुद्धिर्ज्ञेया ॥ तदुक्तं ॥ पंचधा वा चतुर्धा वा भूरमेध्या विशुद्ध्यतीति ॥ तथाश्वसूकरखरोष्ट्राद्यैः संस्पृष्टा शुद्ध्यति द्विधा ॥ अंगारतुषकेशास्थिभस्माद्यैर्मलिनाऽपि सा ॥ गृहशुद्धिस्तु शावादिदूषितत्वे संवर्तेनोक्ता ॥ गृहशुद्धिं प्रवक्ष्यामि ह्यंतरस्थस्य दूषणे ॥ प्रोत्सृज्य मृन्मयं भांडं सिद्ध-मन्नं तथैव च ॥ गृहादपास्य तत्सर्वं गोमयेनोपलेपयेत् ॥ ब्रा-ह्मणैर्मंत्रपूतैश्च हिरण्यकुशवारिणा ॥ सर्वमभ्युक्षयेद्वेश्म ततः शुध्येदसंशय इति । सेकादुल्लेखनाल्लेपनात् गृहं शुद्ध्यतीति शेषः ॥ मार्जनलेपनादि तु नित्यं गृहशुद्धिविषयकं ॥ तत्र बालकैरश-कैर्वा विष्ठावमनादिके कृते उल्लेखनं कार्यं ॥ उल्लेखनं नामभूमेः तस्मिन्स्थले अंगुलिमात्रमृत्तिकानिष्कासनं ॥ इति भूमिशुद्धिः ॥

॥ अथ पात्रशुद्धिः ॥ सुवर्णरूप्यकाष्ठाश्ममुक्तारत्नमयानि च ॥ कांस्यपित्तलताम्रादित्रपुसीसमयानि च ॥ निर्लेपानि तु शुद्ध्यंति केवलेन जलेन तु ॥ सलेपानि च मुद्रादिचूर्णैर्मृद्गोमयांबुभिः ॥ गवाघ्रातानि कांस्यानि श्वकाकोपहतानि च ॥ शुद्धोच्छिष्टानि दशधा त्रिधा मृद्भस्मवारिभिः ॥ गोशृंगेणाऽपि संस्पर्शे पात्रशुद्धिरिहेष्यते ॥ आयसं शाणतैलाभ्यां ताम्रमाम्लेन शुद्ध्यति ॥ भस्मना शुद्ध्यते कांस्यं चर्म तैलेन शुद्ध्यति ॥ शाकरज्जुमूलफलं वासोविदलचर्मणा ॥ पात्राणां चमसानां च वारिणा शुद्धिरिष्यते ॥ शाकं पत्रपुष्पादिरूपं ॥ रज्जुः नूतनरज्जुः ॥ मूलं आर्द्रकादि फलं आमलकादि वासः नूतनवस्त्रं विदलं वेणुविका-

१ शाकं मूलं फलं रज्जुरिति पुस्तकान्तरे ॥

रच्छत्रं व्यजनादि चर्मपादरक्षादि ॥ पात्राणां ताम्रादिपात्राणां ॥
चमसानां यज्ञियानां उलूखलादीनां घृताद्यलिप्तानामिति शेषः॥
वारिणा । सम्यग्वारिप्रक्षालनेन ॥ लिप्तानां तु शुद्धचूर्णादीनां
लेपराहित्यं कृत्वा पश्चाद्वारिणा शुद्धिः ॥ पूर्वमेवोक्तेति ॥ अन्य-
त्राऽपि ॥ भस्मना शुद्ध्यते कांस्यं सुरया यन्न लिप्यते ॥ सुरामूत्र-
पुरीषैस्तु शुद्ध्यते तापलेपनैरिति ॥ आमिषेण तु यल्लिप्तं लोहं
दाहेन शुद्ध्यतीति ॥ सूतिकामद्यविण्मूत्ररजस्वलहतानि च ॥ पात्रा-
णि सप्तरात्रैस्तु गोमूत्रे परिवासयेत् ॥ ब्रह्मक्षत्रविडुच्छिष्टस्पर्शे
संमार्जनाच्छुचिः॥जातिभुक्तोच्छिष्टस्पर्शे विशेषः॥कांस्यपात्रे विशे-
षः॥गंडूषं पादशौचं च यः कुर्यात्कांस्यभाजने॥षण्मासं तु विनिक्षि-
प्य पुनराकारमादिशेदिति॥ अत्र भुवि खनित्वा षण्मासं विनिक्षिप्य

उद्धृत्य भस्मना मार्जितं शुद्ध्यति ॥ तथा ॥ कांस्यं श्वोपहतं चेत्स्यात्खनित्वा भुवि निक्षिपेत् ॥ दोषाऽनुसारात्सप्ताहःप्रभृत्युद्धृत्य भस्मनेति ॥ काष्ठानां तक्षणाच्छुद्धिः मृद्गोमयजलैरिति ॥ तथा मिलितानां तु पात्राणां यद्येकमुपहन्यते ॥ तस्यैव शोधनं प्रोक्तं सामान्यं द्रव्यशुद्धिकृदिति ॥ तथा । मद्यैर्मूत्रपुरीषैर्वा ष्ठीवनैः पूयशोणितैः ॥ संस्पृष्टं नैव शुद्ध्येत ततस्त्याज्यं हि मृन्मयं ॥ इति पात्रशुद्धिः ॥ अथ धान्यादिशुद्धिः । विष्णुः ॥ व्रीह्यादीनां तु यन्मात्रं श्वकाकैरुपहन्यते ॥ तावन्मात्रं परित्याज्यं सतुषं कंडनं भवेत् ॥ व्रीहयः प्रोक्षणादद्भिः शाकमूलफलानि च ॥ तन्मात्रस्यापहाराद्वा निस्तुषीकरणेन वा ॥ अत्र काश्यपेन विशेष उक्तः ॥ व्रीहियवगोधूमानां अनेकपुरुषोद्धार्याणां प्रोक्ष-

णाग्निस्पर्शाभ्यां शुद्धिः ॥ स्वल्पानां तु प्रक्षालनेन तंडुलानां तु
पुनः कंडनेन दलनेन प्रोक्षणेन वा ॥ एवं मुद्गमाषादिसतुषधा-
न्यानामपीति ॥ मृन्मये स्थापितानां च तथा भुवि च तिष्ठतां ॥
यवमाषतिलादीनामदोषं मनुरब्रवीत् ॥ तथा यत्र संक्रममाणाग्नौ
केवलं गृहदीपनं ॥ तत्र सर्वाणि द्रव्याणि गृह्णीयादविचारयन्निति।
सिद्धांते मनुः ॥ पक्कान्नं तु गवाघ्रातं पक्षिजग्धमवक्षुतं ॥ दूषितं
केशकीटैश्च मृदद्भिः प्रोक्षणाच्छुचिः ॥ देवालये विवाहादौ य-
ज्ञेषु प्रकृतेषु च ॥ काकैः श्वभिश्च संस्पृष्टं सर्वं तन्न विवर्जयेत्॥
तन्मात्रमन्नमुद्धृत्य शिष्टं संस्कारमर्हतीति ॥ प्रसक्तोत्सवेषु ॥ इदं
वाक्यं बह्वन्नविषयमेवेति वेदितव्यं ॥ तदाह पराशरः ॥ पक्कं
द्रोणादिकं त्वन्नं श्वकाकाद्युपघातितं ॥ ग्रासमुद्धृत्य तन्मात्रं य-

तु लालाकृतं भवेत् ॥ हैमोदकेन चाभ्युक्षेद्वृत्तेनांबुनाऽपि वा ॥ अग्निज्वालासु संस्पर्शात्सुवर्णमधुसर्पिषां ॥ विप्राणां वेदघोषेण पूतं भोज्यं तु तद्भवेदिति ॥ द्रोणः । षट्पंचाशदधिकाद्विंशत्पलानि ॥ पलं तु षोडशमाषात्मककर्षाश्चत्वारः ॥ पंचगुंजात्मकः माषः ॥ गुंजाः पंचाद्यमाषकः इति ॥ ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम् ॥ यत्तु लालाकृतं यदप्यन्नं श्वादिलालासंबंधं तत्रत्यग्रासमात्रमुद्धृत्याभ्युक्षेदित्यन्वयः ॥ सर्पिषामित्यत्र संस्पर्शादित्यन्वयः ॥ अन्नमेकाहिकं पक्वं श्वकाकाद्युपघातितं ॥ केशकीटाद्युपेतं च तदप्येवं विशुद्ध्यति ॥ एकाहिकमेकदिनभोज्यं॥ एवं हैमोदकादीनां ॥ इदं वाक्यं दरिद्रविषयं ॥ समर्थस्य तु

१ होमोदकेनेत्यन्यस्मिन्पुस्तके पाठः ॥

तदन्नं त्यक्त्वा पुनरन्नं कार्यमेव ॥ क्रीतस्यापि सुदुष्टस्य शुद्धि-
रुक्तामनीषिभिरिति ॥ सुदुष्टस्य शूद्रादिस्पर्शेन सुदुष्टस्य शाकपर्ण
दध्यादेः क्रीतस्य क्रीतत्वेनैव शुद्धिरित्यर्थः ॥ अत्राऽपि विशेषः । दधि-
मधुद्रव्याणां प्लावनेन शुद्धिरिति । धनानां प्रोक्षणेन च॥तदाह शंखः॥
श्रपणं घृततैलानां लवणं गोरसस्य च ॥ भांडानि प्लावयेदद्भिः शा-
कमूलफलानि चेति ॥ प्लावनात्कस्यचिद्भागस्य त्यागात् । धान्या-
नां पर्पटकादीनां श्रपणं अग्निसंस्कारः ॥ द्रव्याणां चैव सर्वेषां शु-
द्धिरुत्प्लवनं स्मृतमिति श्रुत्युत्तरोक्ताप्लवनोत्प्लवनयोः विकल्पो
बोध्यः ॥ शूद्रभांडस्थितगोरसादेः पात्रांतरे स्थापनेन शुद्धिः ॥
॥ तदाह वृद्धवसिष्ठः ॥ आधारदोषे तु नयेत्पात्रात्पात्रांतरे ध्रुव-
म् ॥ घृतं क्षीरदधिक्षौद्रतैलेक्षुरसरूपिणां ॥ आधारदोषे शूद्रभां-

डस्थिताधारदोषे सति ॥ मृत्पर्णादिषु विष्णुना विशेष उक्तः ॥ मृत्पर्णतृणकाष्ठानां श्वास्थिचंडालवायसैः ॥ स्पर्शने विहितं शौचं सूर्यसोमाग्निमारुतैरिति ॥ शुद्धिस्तु फलपुष्पाणां प्रोक्षणात्पुस्तकस्य च ॥ रथ्या कर्दमतोयानि नावः पथि तृणानि च ॥ मारुतेनैव शुद्ध्येत पक्केष्टकचितानि चेति ॥ मनुना द्रव्यहस्तस्य उच्छिष्टादिस्पर्शविशेषश्चोक्तः ॥ उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथंचन ॥ अनिधायैव तद्द्रव्यमाचांतः शुचितामियादिति ॥ इति धान्यादिशुद्धिः ॥ अथोदकशुद्धिः ॥ तदाहतुर्व्यासबृहस्पती ॥ भूयिष्ठमुदकं मेध्यं वैतृष्ण्यं यत्र गोर्भवेत् ॥ अव्याप्तं[1] चेदमेध्यं स्यात्तद्वदेव शिलागतमिति ॥ उद्धृतोदकविषये तु ॥ उद्धृ-

१ अन्यक्तमित्यन्यत्र ॥

ता वा प्रशस्ताः स्युः शुद्धैः पात्रैर्यथाविधि ॥ एकरात्रोषितास्ताश्च त्यजेदापः समुद्धृता इति । विशेषांतरं स एवाह ॥ अक्षोभ्यानि तटाकानि नदीवापीसरांसि च ॥ चंडालाद्यशुचिस्पृष्टमार्गतः परिवर्जयेत् ॥ इति चंडालादिसंबंधमार्गं वर्जयित्वा अन्यमार्गेण जलं गृह्णीयादित्यर्थः ॥ वापीकूपादिविषये हारीतः ॥ वापीकूपतटाकेषु मानुषं यदि शीर्यते ॥ अस्थिचर्मविनिर्मुक्तैर्दूषितं च रसादिभिः ॥ उद्धृत्य तज्जलं सर्वं शोधनं परिमार्जनमिति ॥ अस्थिचर्मविनिर्मुक्तैः चिरकालवशाद्विशीर्णैरित्यर्थः ॥ ॥ देवलोऽपि ॥ उद्धरेदुदकं कुर्यात्प्रचयिष्ठान्मृदस्तथा ॥ पंचगव्यं न्यसेत्पश्चान्न तु तोयं समुद्धरेत् इति ॥ चंडालादिभिः चिरकालोपहतौ तु हारीतः ॥ घटानां शतमुद्धृत्य पंचगव्यं क्षिपे-

ततः ॥ श्वभिः श्वपाकचंडालैर्दूषिते तु विशोधनमिति ॥ उपानच्छ्लेष्मविण्मूत्रस्त्रीरजो मद्यमेव च ॥ एभिर्विदूषिते कूपे कुंभानां षष्टिमुद्धरेदिति ॥ जलाशयेषु स्वल्पेषु स्थावरेषु महीतले ॥ कूपवत्कथिता शुद्धिर्महत्सु च न दूषणमिति ॥ कूपतटाकादिगतनवोदकं दशरात्रेण शुद्ध्यति ॥ तदुक्तं ॥ अजा गावो महिष्यश्च स्त्रियश्चैव प्रसूतिकाः ॥ दशरात्रेण शुद्ध्यंति भूमिष्ठं च नवोदकमिति ॥ जलपात्रादिकं स्वकीयमेव स्वस्य शुद्धं ॥ आत्मशय्यासनं वस्त्रं जायापत्यं कमंडलुः ॥ शुचीन्यात्मन एतानि परेषामशुचीनि हेति हारीते ॥ इत्युदकशुद्धिः ॥ ॥ अथ वस्त्रशुद्धिः ॥ व्यासः ॥ वस्त्रं मृदंभसा शुद्ध्येद्रज्जुर्वैदलमेव च ॥ रज्ज्वादिकं चातिदुष्टं त्याज्यं तन्मात्रमेव चेति ॥ शुद्धे तु तैलादिना दुष्ट-

मिति शेषः ॥ वैदलं शूर्पादि ॥ रज्ज्वादिकं रज्जुशूर्पादिकं ॥ अ-
तिदुष्टं उच्छिष्टादिनेति शेषः ॥ वस्त्रं तु उच्छिष्टादिना दुष्टं चेति
मृदंभसैव शुद्ध्येदिति भावः ॥ यमोऽपि ॥ यदि मूत्रपुरीषाभ्यां
रेतसा रुधिरेण वा ॥ चैलं समुपहन्येत ह्यद्भिः प्रक्षालयेत्ततः ॥
यदंभसा न शुद्ध्येत वस्त्रं चोपहतं दृढं ॥ छेदने तस्य दाहो वा-
यन्मात्रमुपहन्यते ॥ अत्र छिन्नदग्धयोरपि परित्याज्यत्वात् ॥
छेददाहाभ्यां शुद्ध्यभिधानमत्यंतदुर्लभोत्तमविषयं । दरिद्रस्य
अनुत्तमेऽपि छेदनादिना शुद्धिः ॥ अत्र विशेषः ॥ वस्त्रधान्यादि-
राशीनामेकदेशस्य दूषणे ॥ तावन्मात्रं समुद्धृत्य शेषं प्रोक्षण-
मर्हतीति ॥ दूषणे चंडालादिस्पर्शे ॥ शेषस्य प्रोक्षणविधानात् ॥
उद्धृतस्य प्रक्षालनमिति गम्यते ॥ सर्वस्य स्पर्शे तु मनुः ॥ अ-

द्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससां ॥ प्रक्षालनेन स्वल्पानामद्भिः शौचं विधीयत इति ॥ नांशैर्बहुत्वमेकपुरुषग्राह्यत्वाभावादधिकत्वं ॥ अतएव देवलः ॥ और्णकौशेयकार्पासवार्क्षक्षौमदुकूलजाः ॥ अल्पशौचा भवंत्येते शेषेण प्रोक्षणादिभिः ॥ तान्येवामेध्ययुक्तानि क्षालयेच्छोधनैः स्वकैः ॥ तुलिकामुपधानं च ऊर्णं रक्तांबरं तथा ॥ शोषयित्वा तपेत्किंचित्करैः संमार्जयेन्मुहुः ॥ पश्चाच्च वारिणा प्रोक्ष्य विनियुज्येत कर्मणि ॥ तान्यप्यतिमलिष्ठानि यथावत्परिशोधयेदिति ॥ अधिकोपघाते तु याज्ञवल्क्यः ॥ शेषैरुदकगोमूत्रैः शुद्ध्यत्याविककौशिकम् ॥ सश्रीफलैरंशुपटः सारिष्टैः कुतुपस्तथा ॥ स गोरसार्कतः क्षौममिति ॥ शेषैः सक्षारमृत्तिकादिभिः ॥ आविकं कंबलादि ॥ कौशिकं सरपटादि ॥

अंशुपटः वर्तुलतंतुकृतः ॥ कुतुपः सर्वतश्छागलोमकृतः ॥ धाबलिभोटुशकलादिसंज्ञिकः ॥ क्षौमं पीतांबरादि ॥ तूलिकाकशिपु । सुपत्ति । उपधानं उपबर्हणं । शिरोधःस्थानीयं । पत्रं पुष्पं प्रक्षालनेन गंधरहितं स्यात्तत्प्रोक्षयेत् ॥ इदं तु भोगार्थं देवार्थं चंपकादि सर्वपुष्पं प्रक्षालयेदेव ॥ अप्रक्षालितपुष्पाणि प्रक्षाल्य तुलसीं तथेऽति शतापराधमध्ये अप्रक्षालितपुष्पसमर्पणस्यापराधत्वेनोक्तेः ॥ रक्तांबरं मांजिष्ठादि ॥ क्षालने यस्य रंगो गच्छति तन्न क्षालयेत् ॥ चैलवच्चर्मणां शुद्धिः प्रोक्षणान्नच वाससामिति वचनाद्वाससां यंत्रादुत्तीर्णानां ॥ इति वस्त्रशुद्धिः ॥ ॥ अथ स्वभावशुद्धिः ॥ तत्र मनुः ॥ दानं तपोऽग्न्यनीहारौ मृद्द्रव्यमथवा जलं ॥ वायुर्विद्या अर्थसत्ये शुद्धिकर्तरि देहि-

नाम् ॥ वागच्युता जपश्चैव सत्ये शुद्धिः प्रकीर्तिता ॥ सर्वेषा-
मेव शौचानामर्थशौचं परं स्मृतं ॥ योऽर्थशुद्धिः स हि शुचिर्न मृ-
दा शुचिरिष्यते ॥ वेदाच्छुद्धयंति विद्वांसो दानेनाकार्यकारिणः ॥
प्रच्छन्नपापा जप्येन तपसा वेदवित्तमाः ॥ मृत्तोयैः शोध्यते शोध्यं
नदी वेगेन शुद्धयति ॥ रजसा स्त्री मनो शुद्धा संन्यासेन द्विजोत्त-
माः ॥ अद्भिर्गात्राणि शुद्धयंति मनः सत्येन शुद्धयति । विद्यातपो-
भ्यां पूतात्मा बुद्धिर्ज्ञानेन शुद्धयति ॥ इति स्वभावशुद्धिः ॥ एवमा-
दिशुद्धिकरं सर्वोत्तमं हरिस्मरणं कीर्तनं च ॥ तदुक्तं पद्मपुराणे ॥
नाम्नोऽस्य यावती शक्तिः पापनिर्हरणे हरेः ॥ तावत्कर्तुं न श-
क्नोति पातकं पातकी जनः ॥ स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो
न जातुचित् ॥ सर्वे विधिनिषेधाः स्युरेतयोरेव किंकराः ॥ तपोज-

पादि सच्छिद्रं देशकालार्हवस्तुतः ॥ सर्वं करोति विधिना ह्यनु-
संकीर्तनं तवेति ॥ तदेतत्सर्वं तरंगचतुष्टयं संग्रहीतश्रुतिपुराण-
स्मृत्युक्तं विस्तरभयात्किंचित्किंचित्प्रमाणमुदाहृतं ॥ किंचिदर्थ-
तोऽनुदितं ॥ इति सारज्ञैर्ज्ञेयम् ॥ तत्कर्मध्यानपूजादिसाधनैः पु-
रुषार्थदं ॥ सर्वशुद्धिकरं शुद्धं विष्णुं वंदे निरंतरम् ॥ त्रिशून्यं ष-
ट्चन्द्रमिति शाके दुर्मतिवत्सरे ॥ अश्विनो ह्यधिको मासो मार्गपौषे
क्षयाभिधौ ॥ ततश्चैत्रोऽधिकोयस्मिन्तद्वर्षस्य तु कार्तिके ॥ छ-
लारिश्रीन्नृसिंहेन कृते स्मृत्यर्थसागरे ॥ भवेच्छुद्धितरंगोऽयं श्रीम-
ध्वपतितुष्टिदः ॥ इति श्रीशुद्धितरंगः समाप्तः ॥



छलारिनारायणवर्यपुत्रनृसिंहनाम्ना रचितः शुभोऽयम् ॥ साधारणः पंडितपामराणां ग्रंथः स्फुटोऽयं पितृतुष्टये स्यात् ॥ इति श्रीमच्छलारिनारायणाचार्यात्मजनृसिंहाचार्यरचितः स्मृत्यर्थसागरः समाप्तः ॥



# स्मृत्यर्थसागर टिप्पणी

प० १. श्रीमल्लक्ष्मीवेंकटेशाय नमः ॥ श्रीमन्नृसिंहाय नमः ॥ अथग्रंथसमाप्तिप्रतिबंधकप्रत्यूहनिवृत्त्यर्थं शिष्यशिक्षायै च मंगलं निबध्नाति ॥ श्रीनृसिंहमिति ॥ सुसुखं सुष्ठु सुखं मोक्षो यस्मात् ॥ स्वात्मरूपम् स्वस्य आत्मनः आत्मरूपम् । बिंबरूपं य आत्मनि तिष्ठन्निति श्रुतेः॥सद्गुणं संतः निर्दुष्टाः गुणा ज्ञानानन्दादयो यस्य तं मध्वगुरुं मध्वस्य वायोः गुरुं श्रीव्यासं कृष्णद्वैपायनरूपं श्रीनृसिंहम् । न केवलं ना सिंह इवेति उपमितं व्याघ्रादिभिरिति समासः ना इव सिंह इव अथवा नारूपं सिंहरूपं यस्मिन् मयूरव्यंसकादित्वात्समासः तथाचोक्तं श्रीमद्भागवते सप्तमस्कंधे । किमेतन्नृमृगेंद्ररूपमित्यत्र तं श्रीविष्णुं नौमि एतैः श्रीविष्णौ कर्मप्रवर्तकत्वं ज्ञानदातृत्वं मोक्षदातृत्वं दुष्टसंहारकत्वं द्योत्यते विशेषणैः । विष्णोरवतारत्वान्न व्यासादिविशेषणकृते दोषः॥ तथाच स्कांदे ॥ गौतमस्य ऋषेः शापाज्ज्ञानेत्वज्ञानतां गते ॥ संकीर्णबुद्धयो देवा ब्रह्मरुद्रंपुरःसराः ॥ शरण्यं शरणं जग्मुर्नाराय

णमनामयम् ॥ तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः ॥ अवतीर्णो महा-योगी सत्यवत्यां पराशरात् ॥ नृसिंहविषये भागवते स्पष्टमेव ॥ अवतारेषु वि-ष्णुपूर्णत्वमंशत्ववा तत्र लीनत्वं च स्वाप्ययात् इत्यनेनोक्तमेव ॥ तत्रैव श्रुत्यादि ॥ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमे-वावशिष्यते ॥ स आत्मन आत्मानमुद्धृत्य आत्मन्येव विलापयत्य-थात्मैव भवति इति चेत्यलम् ॥ १ ॥ मध्वगुरुमिति विशेषणेऽवतार कारणं तत्कालं चोक्त्वा नमस्करोति सार्धद्वाभ्याम् ॥ कलाविति कलौ अस्मिन् कलियुगे प्रवृत्ते बौद्धादिमतं आदिशब्देन प्रच्छन्नबौद्धं गृह्यते अद्वैतमायावादिनां मतमित्यर्थः । ब्रह्माहं निर्गुणोऽहं वितथमिदमिति ॥ रा-मानुजं। तस्येदमित्यण् विशिष्टाद्वैतम् ॥ निराकर्तुं ॥ एकोनपञ्चाशदधिकाब्द-सहस्रके एकेनोनाः पञ्चाशत् नवचत्वारिंशदित्यर्थः तैरधिकमब्दसहस्र-कम् तस्मिन्॥ १०४९ तमे शके शालिवाहनराज्ञः शके सन्मतस्थाप-

नायाऽवतीर्णं भगवदनुज्ञयेति शेषः ॥ तथाचोक्तम् ॥ स्मेराननो भुवनजी-
वनमाबभाषे ॥ वेदांतमार्गपरिमार्गणदीनदूना दैवीः प्रजा विशरणाः करुणा-
पदं नः ॥ आनंदयेः सुमुख भूषितभूमिभागो रूपांतरेण मम सद्गुणनि-
र्णयेन ॥ इत्यादि ॥ शाके शकसंबंधौ एकादशशते एकादशं एकादशतमं
तस्यपूरणेडट् । तत् शतं तस्मिन् विंशत्यष्टयुगे अष्टविंशे युगे वर्षे गते
सति अत्र युगशब्दो वर्षवाची ॥ अथवा युते इति पाठे वर्षे इति शेषः ॥
बदरिकां प्राप्तमिति शेषः ॥ महागुणं महांतः संति गुणाः ज्ञानादयः यस्मि-
न् श्रीमध्वगुरुं तद्रूपं मुख्यवायुं सदा वंदे ॥ गुणाढ्यान् गुणैर्युक्तान्
भगवतो भक्तान् जयतीर्थादिनामकान् गुरून् उपदेष्टृन् संनम्य स्पष्टं यथा
स्यात्तथा स्मृत्यर्थसागरं कुर्मः करोमि अस्मदो द्वयोश्चेति बहुवचनप्रयोगः ॥
तत्र स्मृत्यर्थसागरे क्रम उच्यते । कालेति सार्धेन । कालश्च आशौचं च आ-
ह्निकं अह्नि कार्यं तत्र च दीयते इत्यनेन ठक् तेषां । वस्तुनः भांडादेः शुद्धिः

शुचित्वं तस्याश्च क्रमात् उत्तक्रमेण तरंगाख्याः तरंग इति आख्या अभिधानं येषां यथा च कालतरंगः आशौचतरंगः आन्हिकतरंगः वस्तुशुद्धितरंग इति चत्वारो निर्णयाः प्रोच्यंते कालनिर्णयः आशौचनिर्णयः आह्निकनिर्णयः वस्तु-शुद्धिनिर्णयश्चेति यावत् ॥ मयेति शेषः नृसिंहाचार्येण ॥ तत्र च प्र-थमत एव कालनिर्णयकारणं कथयति तत्रादाविति सर्वधर्माणां सर्व-कर्तव्यकर्मणां हेतुत्वात् हेतोः यथा अस्मिन् काले इदमिति आदिका-रणत्वात् कालनिर्णय एवादावुच्यते इति शेषः सर्वकार्यनिमित्तकारण-त्वादिति यावत् ॥ ६ ॥

नि० प. १ निर्णयः निर्णेतुं योग्यः कालस्यानंतत्वात् ॥ अब्दायनर्तु०॥ तथाचोक्तं कालमाधवे ॥ अब्दायनर्तुमासाश्च पक्षः प्रकरणांतरे ॥ अब्दः पंचविध इति ॥ अब्दः वर्षं। संवत्सरो वत्सरोऽब्दो हायन इत्याद्यमरः ॥ पंचविधः पंचप्रकारकः ॥ तथाच ॥ अब्दः पंचविधश्चांद्रो व्रतादौ तिलका-

दिके ॥ सुजन्मादिव्रते सौरो गोसत्रादिषु सावनः ॥ त्रयोप्याचार्यसेवादौ- विकल्प्यंते निजेच्छया ॥ आयुर्दाये तु नाक्षत्रो बार्हस्पत्योऽधिवत्सरे ॥ यथा सूर्ये द्वादशराशयुल्लंघिते एकोऽब्दः तथैव बृहस्पतेर्वेति शंकायामाह ॥ तत्र मेषादिराशिष्विति ॥

सां० प० १ कॢप्तः यथायोग्यं ॥ सर्वकर्मबहिष्कृतः सर्वकर्मणि व्रतोद्वा- हादिकर्मणि बहिष्कृतः त्यक्तः ॥ तथाचोक्तं ॥ अतिचारगते जीवे वर्जयेत्त- दनंतरम् ॥ व्रतोद्वाहादिकार्येषु इति ॥

नि०प. २ नित्यनैमित्तिकादिकर्म इति ॥ नित्यं संध्यादि नैमितिकं नवरा- त्रोत्साहादि ॥ तथा च हेमाद्रिकृतचतुर्वर्गचिन्तामणौ व्रतखण्डे प्रथमाध्याये लग्ननीचस्थे वक्रसंस्थेऽप्यभिचरणगते बालवृद्धास्तगे वा संन्यासो देवया- त्राव्रतचरणविधिः कर्णवेधस्तु दीक्षा ॥ मौंजीबंधोऽथचूडा परिणयनविधिर्वा- स्तुदेवप्रतिष्ठा वर्ज्याः सद्भिः प्रयत्नात्त्रिदशपतिगुरौ सिंहराशिस्थिते चेति ॥

नीचलक्षणं ज्योतिःशास्त्रे ॥ सूर्यादिषूच्चमजगोमकराः क्रमात्स्युः स्त्रीक-
र्किमीनवणिजोऽस्तगमं च नीचमिति ॥ उच्चस्थानात्सप्तमं नीचमित्यर्थः । तथा-
च नीचस्थे गुरौ मकरगते इत्यर्थः ॥ शौनकः ॥ कीर्त्यागारविवाहयागगमनं
क्षौराद्यकर्णव्यधं विद्यादेवविलोकनोपनयनं दीक्षा परीक्षा व्रतं ॥ स्नानं ती-
र्थगमं रणं पुरमहादानप्रतिष्ठापनं सिंहस्थे विबुधार्चिते न शुभदं क-
र्तुस्तथासूर्यगे ॥ अस्तबालादिलक्षणानि तत्रैव ॥ रविणासत्तिरन्येषां ग्र-
हाणामस्तमुच्यते । ततोऽर्वाक् वार्द्धकं विद्यादूर्ध्वं बाल्यं प्रकीर्तितमिति
एतयोरवधिस्तु ज्योतिःशास्त्रेऽनेकधा दर्शित इति तत्र द्रष्टव्यं विस्तारभया-
न्न लिख्यतेऽत्रेत्यलम् ॥

सां० प. २ ब्रह्मांडे ब्रह्मांडपुराणे ॥ नवम्यां गुरोः सिंहराशिगत-
कालान्नवमे दिवसे ॥ वत्सरे यत्कृतमिति ॥ एकवत्सरपर्यंतं स्नाने कृते
यत्पुण्यं तदेकेन स्नानेनेत्यर्थः ॥ अतः कथंचिदपि केनापि प्रकारेण । उक्तमे-

व पुरतो वक्रातिचारगत इति ॥ सिंहस्थे गुरौ गौतम्यां गोदावर्यां स्नानं समाचरेत् कार्यम् ॥

सां० प. ३ यथैकदिवसे दिन इति यथा एकस्मिन्दिवसे दिनः सूर्यः सर्वमाकाशमुल्लंघयति तथा तत्र एकस्मिन्दिवसे स्नानदानेन सर्वं क्रतुफलं प्राप्नोतीत्यर्थः ॥

सां० प. ४ द्वात्रिंशद्भिरिति द्व्यधिकत्रिंशद्भिर्मासैः षोडशभिर्दिनैश्च चतुर्घटिकाभिरित्यर्थः ॥

सां० प. ४ असंक्रांतमासः । न संक्रांतः सूर्यो यस्मिन्मासे । मस्यंते परिमीयंते स्वकलावृद्धिहानितः ॥ मास एते स्मृतामासाः स्त्रिंशत्तिथिसमन्विता इति सिद्धांतशिरोमणौ ॥ अधिमासक्षयमासविषये कालमाधवे स्पष्टम् ।

सां० प. १० उत्तरे मासि ॥ कर्तव्यानीति शेषः ॥

सां० प. १२ अथ मलमास इति यमः ॥ गर्भे वार्धुषिके भृत्ये श्राद्धकर्मणि

मासिके॥सपिंडीकरणे नित्ये नाधिमासं विवर्जयेत् ॥ तीर्थस्नानं जपो होमो यवव्रीहितिलादिभिः ॥ जातकर्मांत्यकर्माणि नवश्राद्धं तथैव च ॥ मघा त्रयोदशीश्राद्धं श्राद्धान्यपि च षोडश ॥ इत्याद्युक्तमेवान्यत्र ॥

नि० प. १३ स्नानं च स्नानविधिनेति चंद्रसूर्यग्रहणादिस्नानम् ॥ तथाच पैठीनसिः ॥ चंद्रसूर्यग्रहे स्नानं श्राद्धदानजपादिकम् ॥ कार्याणि मलमासेऽपि नित्यं नैमित्तिकं तथा ॥ इति ॥ नित्यं नित्यदानादि। तथा च दानं दैनं दिनं च यत् ॥ इत्युक्तमुपरि ॥

अग्न्याधानेति ॥ श्रौतस्मार्तक्रियाः सर्वा द्वादशे मासि कीर्तिताः ॥ त्रयोदशे तु सर्वास्ता निष्फलाः परिकीर्तिताः ॥ त्रयोदशे मलमासे ॥

सां० प. १३ साक्षिवचनानीति माधवकृतकालनिर्णये तत्र च यमः गर्भे वार्धुर्षिके० इत्यादि यममरीचिगौतमादिस्मृत्युदाहरणानि स्पष्टतराण्यपि टिप्पणीनामापवादभयान्नोच्यंतेऽत्र ॥

नि० प. १४ देवकार्यार्थं पितृकार्यार्थं पक्षयते परिगृह्यते यः कालविशेषः सपक्षः इति माधवोक्तं निर्णीयते दैवे कर्मणीत्यादिना। अथवेयं व्याख्या। चंद्रस्य पंचदशकलानां पूरणं क्षयो वा यस्मिन्निति॥

सां० प. १४ तिथिरिति तनोति विस्तारयति वर्धमानां क्षीयमाणां वाचंद्रकलामेकां यः कालविशेषः स तिथिः॥ अथवा तन्यते कलया इति तिथिः तदुक्तं तन्यंते कलया यस्मात्तस्मात्ता स्तिथयः स्मृताः। सिद्धांतशिरोमणौ॥ स्कांदे च॥ अमादिपूर्णमास्यंता या एव शशिनः कलाः॥ तिथयस्ताः समाख्याताः षोडशैव वरानने इति॥

सां० प. १४ पार्वणमिति " तत्र दीयते कार्यं भववत्॥ "

नि० प. १७ दृष्टेंद्विति यस्याममायां चंद्रमा दृश्यते सिनीवाली यस्यां चंद्रस्य कला न दृश्यते सा कुहूः॥ तथा चामरः॥ सा दृष्टेंदुः सिनीवाली सा नष्टेंदुकला कुहूरिति॥

सां० प. १९ कार्मुकं धनुः। तन्नामकराशिमित्यर्थः॥ झषं मकरं मकरराशिमिति यावत्॥

नि० प. २३ तन्मध्ये द्वादशघटिकामध्ये। शूर्पादि। शूर्पपात्रं कर्णाटे प्रसिद्धमिति भाति॥

सां० प. २३ यांतिथिमिति। यस्यां तिथौ सत्यां भास्करः सूर्य उदयं प्राप्नोति सा स्नानदानादौ ज्ञेया॥

नि० प. २५ आद्ये अधिकचैत्रे॥

सां० प. २५ उपवसेदिति कृष्णावतारस्याधुनिककालसमीपत्वात्।

नि० प. २६ सूर्योदयादधः सूर्योदयात्पूर्वम्॥

नि० प. ३३ भोक्ष्यामि अपरे दिने द्वादश्यामित्यर्थः स्वापं निद्रां पुनर्भोजनं मैथुनं चेति द्वंद्वः। उष्णोदकं च अत्यंबु च तयोः पानं तत्र उष्णोदकं न पेयं अतिशयेन अंबु च नाम शीतोदकं न पेयमिति यावत्॥

सां० प. ३४ तिथिरष्टगुणम् । सामान्यादष्टगुणम् । एवं सर्वत्र ॥

नि० प. ३५ अष्टम्यंते अष्टमीतिथिसमाप्तौ पारणं कार्यम् । ऋक्षांते श्रवणनक्षत्रांते । पारणम् पारतीरकर्मसमाप्ताविति धातोरयं साधितः शब्दः ।

नि० प. ३६ अपराह्णिकी तत्कालव्यापिनी । इयं तृतीया विद्याधिराजस्वामिनां पुण्यतिथिः ॥

गंगोत्पत्तिः भगीरथेन चात्रानीता । तत्र सप्तम्याम् । इयं मध्याह्नव्यापिनीग्राह्या दिनद्वये तद्व्याप्तौ पूर्वा ॥

सां० प. ३६ त्रयोदश्यां० इयमपि मध्याह्नव्यापिनी ग्राह्या । श्रीनृसिंहजयंती जन्मोत्साहस्तु मध्याह्ने इति केचित् । दशहरानामका इति धर्माब्धौ तु गंगावतार इति उक्तं परं च सप्तम्यां गंगोत्पत्तिरित्याद्यपि ॥

नि० प. ३७ अत्र वटसावित्रीति ॥ यदा चतुर्दशी अष्टादशघटिका भवति तदा सावित्रीव्रतमपि परित्याज्यमिति माधवः ॥ इदं व्रतं अमावास्यामपि

इदं कालमाधवे हेमाद्रौ च स्पष्टम् ॥ पूर्णिमायां तु हेमाद्रिणा पुत्रकामव्रतं कथितम् ॥

नि० प. ३८ शेष इति ॥ अपिच ॐ प्रते विष्णो अब्जचक्रे सुतप्ते जन्मांभोधितर्तवेचर्षणींद्राः ॥ मूलेबाह्वोर्दधन्यापुराणानि विष्णोर्लिंगानि आयुधानि बिभ्रत् ॥ इत्यादयः श्रुतयः प्रमाणानि तथाच पद्मपुराणादौ गर्गादिसंहितादौ स्मृत्यादौ स्पष्टमित्येवालम् ॥

सां० प. ३९ चक्रं आदाय ताप्य छांदसत्वादसमासेऽपि ल्यप् ब्राह्मणस्य बाहौ धार्यमिति सुगमत्वान्न लिखितं भाष्यम् ॥

सां० प. ४३ मूलं मूलकादि । पत्रं तंडुलजादि । पुष्पं ऋषिपुष्पादि । पूगीफलमिति शाककरणरूढ्यभावाच्च ॥

नि. प. ४४ प्राण्यंगचूर्णमिति शुक्तिजादि, सुधा इ० । चर्मांबु चर्मणोद्धाटितं तत्र स्थितं वा बीजपूरकं मातुलुंगं । फलपूरो बीजपूर इत्याद्यमरः ॥

अयज्ञशिष्टं वैश्वदेवादिरहितम्. अ० यज्ञः देवपित्रादियज्ञः, उक्तं पुरतः ॥

सां. प. ४४ गोछागीमहिषीदुग्धादित्येकं पदम्, छागी अजा, द्विजक्रीताः द्विजात्क्रीता द्विजेन क्रीता इति वा द्विजात् विनिमयत्वेन गृहीता इत्यर्थः। गव्यम् तस्य विकार इत्यधिकारस्थेन गोपयसोर्यदित्यनेन यत्। तेन न केवलं पयः ॥

नि. प. ४५ हैमंतिकमिति एतदभिप्रायेणैव धर्माब्धौ, व्रीहियवमुद्ग-तिलकंगुकलायश्यामाकधान्यानि रक्तभिन्नमूलकं सूरणादिकंदः सैंधवं सामुद्रलवणम् गव्यानि दधिसर्पिर्दुग्धानि पनसाम्रनालिकेरफलानि ह-रीतकीपिप्पलीजीरकशुंठीचिंचाकदलीलवलीधात्रीफलानि गुडेतरेक्षुविका-रा इत्येतान्यतैलपक्वानि, तत्र च ग०यं तक्रं माहिषं क्वचिदित्युक्तम्, मूल-कास्तु येभ्यो दुर्गंधिस्ते सर्वे त्याज्या इति विधानपारिजाते. तेन मूलकजा-त्यवच्छिन्नाः सर्वे त्याज्याः 'मुळा' इति महाराष्ट्रभाषायाम् ॥

सां. प. ४५ समुद्रगाः। समुद्रं गच्छंति ताः एतदन्या अन्याभिर्नदीभिर्गच्छंत्यः सरः प्राप्ता वा ॥

नि. प. ४६ वराहजयंतीति। इयं मध्याह्नव्यापिनी ग्राह्या। देवायसमर्प्येति। उक्तं च दधि भाद्रपदे मासे वर्जयिष्येसदाहरे इति॥

सां. प. ४६ नित्यम् संध्यादिवदवश्यकर्तव्यताकम्। सांवत्सरी, संधिवेलाद्यृतुनक्षत्रेभ्योऽणित्यण् टिड्ढेति ङीष् ॥

सां. प. ४८ उपाकर्मदिने इत्येकंपदम् कुर्यादित्यस्य उत्सर्जनं कर्म॥

नि. प. ४९ पूर्वमेव निर्णीता एकादशीनिर्णयानंतरं चैत्रमासनिर्णये ॥

सां प. ४९ याताः यामा यस्मिन् तथा न संति ते अयातयामाः चतुर्थीति अस्यां स्यमंतकोपाख्यानपठने चंद्रदर्शनदोषो गच्छति ॥

सां प. ५० भाद्रपदशुक्लषष्ठी। अस्यां बलभद्रजन्मोत्सवः॥ तथाचोक्तम्॥ अथ व्रजे पञ्चदिनेषु भाद्रे स्वातौ च षष्ठ्यां च सिते बुधे च॥ इत्यार-

श्य पुरतः। बभूव देवो वसुदेवपत्न्यां विभासयन्नंदगृहं स्वभासा इ० ॥

भाद्रपदशुक्लाष्टमी कृष्णाष्टमी। कृष्णोत्साहाष्टमी अस्यां राधाजन्म अतस्तस्यां कृष्णसहितराधायाः पूजनम् कार्यम् इदं गर्गसंहितादौ स्पष्टम्। इति भाति। इयं दूर्वाष्टमीत्यन्यत्र। दाक्षिणात्याः "दक्षिणापश्चात्पुरसस्त्यक्"। ऋक्षे जेष्ठानक्षत्रे अस्यां ज्येष्ठादेवीपूजनम् ॥

नि० प.५१ आमिक्षेति "आमिक्षा सा श्रृतोष्णे या क्षीरे स्याद्दधियोगतः" इत्यमरः श्रृतं पक्कं च तदुष्णं च तस्मिन् क्षीरे दधियोगतो या विकृतिः सा आमिक्षा॥नमस्कृत्वेति।पर्यंके शायिनं जगन्नाथं सर्वोत्तमं विष्णुं नमस्कृत्वा शनैर्गत्वा अवघुट्य प्रपरिवृत्य। घुट् परिवर्तने। उपचारकैः पूजयेत् ॥

तत्पादौ भक्त्या प्रणम्य। तस्य विष्णोः प्रणम्य नमस्कृत्य एवं मंत्रं पठन् देवमुत्तरामुखं स्थापयेत् ॥

सां० प.५१ येन त्वया इदं सर्वं स्थावरजंगमं जगत् परिवृत्तं स त्वं क-

त्पानां परिवर्तक देवाधिदेव जगन्नाथ परिवर्तस्व इ० सुगमम् ॥

बुधश्रवणसंयुक्तेति।बुधः तन्नामकवासरः श्रवणं तदभिधं नक्षत्रं तयोर्युक्ता तथाचोक्तं विष्णुधर्मोत्तरे भार्गवकृष्णसंवादे ॥ राम उवाच ॥ उपवासासमर्थानां किं स्यादेकमुपोषितम् ॥ इ० प्रश्ने कृष्ण उ० या राम श्रवणोपेता द्वादशी महती तु सा ॥ तस्यामुपोषितः स्नातः पूजयित्वा जनार्दनम् ॥ प्राप्नोत्ययत्नात् धर्मज्ञो द्वादशद्वादशीव्रतम् ॥ इ० केवलं श्रवणद्वादशीमाहात्म्यं वर्णयित्वा बुधयोगं वर्णयति। श्रवणद्वादशीयोगे बुधवारो भवेद्यदि ॥ अत्यंतं महती नाम द्वादशी सा प्रकीर्तिता ॥ स्नानं जप्यं तथा दानं होमं श्राद्धं सुरार्चनम् ॥ सर्वमक्षयमाप्नोति तस्यां भृगुकुलोद्भवे । इत्यादि ॥ तथा च ब्रह्मवैवर्ते भविष्यत्पुराणे। श्रवणद्वादशीउपवासविषयेऽप्यत्रैव विष्णुरहस्ये। द्वादश्यामुपवासीत त्रयोदश्यां तु पारणम् ॥ निषिद्धमपिकर्तव्यमित्याज्ञा परमेश्वरी॥ बुधश्रवणसंयुक्ता सैव चेद्द्वादशी भवेत् । अतीव म-

हती तस्यां सर्व कृतमिहाक्षयम् ॥ स्पष्टं चैतद्धेमाद्रिप्रणीतचतुर्वर्गचिंतामणौ व्रतखण्डे ॥

नि० प.५२ त्रिमुहूर्तव्यापिनीत्यादि मुहूर्तं घटिकाद्वयम् ॥

नि० प.५६ अस्मिन्पक्षे षष्ठीति, तथा स्कांदे ॥ प्रोष्ठपदासिते पक्षे षष्ठी भौमेन संयुता ॥ व्यतीपातेन रोहिण्या सा षष्ठी कपिला स्मृता, प्रोष्ठपदो भाद्रपदः स चात्र दर्शितो ग्राह्यः रोहिणीयोगस्य तत्रैव संभवात् ॥

पत्रकं पद्मकं षष्ठी मधुगव्येन भूषयेत् इत्यत्र पत्रकं पद्मकं यष्टी मधुगव्येन पेषयेदिति पाठः ( चतुर्वर्गचिं.व्र.खं.प.५७९ ) गव्येन इत्यत्र कल्केनेत्युक्तं तत्रैव अत्रत्यपाठे गव्येनेति क्षीरविशेषणम्, कल्केनेति पाठे, गव्येन आलोड्य संमर्द्य तेन कल्केन स्नानं कुर्यात् पल्लवैरित्यत्र पञ्चभंगैरिति पाठः नाम पञ्चपल्लवैः एतत्कपिलाषष्ठीव्रतं स्कांदे ॥

सा० प.५६ चंद्रषष्ठीति अस्या विचारस्तु तत्रैव हेमाद्रौ । जीवत्पितृके-

णेति । एतेन मृतपितृकेण न कार्यं कुर्वतामाधारो विचिंतनीयः ॥

सा० प.५८ जीवत्पितृकत्वादिति धर्माब्धौ तु सपिंडकमपिंडकं वेत्युक्तम् अत्राजीवत्पितृकस्याधिकाराभावात् सपिंडकमित्यस्य जीवत्पितृकस्यैवसंभवादमातुलस्यैवेति केचित् ॥

नि० प.५९ नवानां रात्रीणां समूहो नवरात्रमित्युक्ते क्षये नवसु रात्रिषु उत्सवः कार्यो वेति प्रश्ने आह तिथिवृद्धाविति ॥

सा० प.५९ श्रवणादिभागे इत्यनेन पुरतः श्रवणादौ इत्यस्यार्थं द्योतयति सिद्धांतकौमुद्यां तु नक्षत्रे च लुपीत्यस्योदाहरणे श्रवणेन विसर्जयेदित्युक्तम् श्रवणं चंद्रे गते इत्युक्ते आद्यर्थे आयास्यत्येव ॥

नि० प.६० दशमी विजयादशमीति । दिनद्वये उदयकाल इति निर्णयसिंधौ तथा च हेमाद्रौ उत्तरखण्डे कश्यपः (कलिकातानगरमुद्रितहेमाद्रौ त्वद्युक्तं कल्पकेनेत्युक्तं २) ॥ उदये दशमी किञ्चित्सम्पूर्णैकादशी यदि । श्रव-

णर्क्षे यदा काले सातिथिर्विजयाभिधा ॥ श्रवणर्क्षे तु पूर्णायां काकुत्स्थः प्रस्थितो यतः।उल्लंघयेयुः सीमान्तं तद्दिनर्क्षे ततो नराः" इति अन्येषु सर्वेषु पक्षेषु नवमीयुक्ता ग्राह्या तदुक्तं पुराणसमुच्चये "या पूर्णा नवमीयुक्ता तस्यां पूज्यापराजिताम्। क्षेमार्थं विजयार्थं च प्रसिद्धविधिना नरैः (पूर्वोक्तविधिनेति पुस्तकान्तरे) नवमी शेषसंयुक्तदशम्यामपराजिता ॥ ददाति विजयं देवी पूजिता जयवर्धिनी ॥ तथाचान्यत्र ॥ अश्विने शुक्लपक्षे तु दशम्यां पूजयेन्नरः। एकादश्यां न कुर्वीत पूजनं चापराजितम् ॥ तथाच स्कान्दे "दशमीं यः समुल्लंघ्य प्रस्थानं कुरुते नृपः। तस्य संवत्सरं राज्ये न क्वापि विजयो भवेत्" इत्यादि (हे.व्र.खं.अ.१४)॥

सा० प.६० पूजाप्रकारस्त्विति। आथर्वणगोपथब्राह्मणे। अथापराजितदशम्यां पूर्वोक्तं विजयमुहूर्ते उक्तमित्याद्याश्वयुजदशमीमाहात्म्यमुक्त्वा राजा निर्गत्य भवनात्पुरोहितपुरोगम इत्यादिप्रस्थानं प्रख्याय नगरसी-

मांतं वास्तुपूजादिकपालपूजेत्यादिपूजाः कथयित्वा । 'मंत्रैर्वैदिकपौराणैः' पूजयेच्च शमीतरुम् । अमंगलानां शमनी शमनी दुष्कृतस्य चेत्यादिशमीपूजा विहिता । अतश्च शत्रुप्रतिकृतीत्याद्युक्तमित्यलम् ॥

नि० प.६१ आनंदसूक्तिस्थिरित्यशुद्धम्, आनंदसूक्तिथिरिति शुद्धम्, आनंदं आनंदतीर्थं "विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वाच्यः" सूते अथवा आनंदं आनंदतीर्थोत्साहम् ॥

जगदीशितुः मुख्यवायोः पूर्णबोधांबुधेः आनंदतीर्थस्य । कार्तिक इति कार्तिकेऽहं करिष्यामि प्रातःस्नानं जनार्दन ॥ प्रीत्यर्थं तव देवेश दामोदर मया सहेति देवपुरतः संकल्प्य प्रातःस्नानं कार्यमित्यर्थः, मया लक्ष्म्या सह ॥

सां०प.६१ शिलया भेदने तथेति।उदाहरंति।बीजमेव समुद्भूतं द्विदलं चांकुरं विना॥दृश्यते यत्र सस्येषु द्विदलं तन्निगद्यते। कार्तिके वर्जयेदिति नारदीये ॥

नि० प.६२ श्यामलया स्वभार्यया युतः सूर्यजो यमः प्रीयतां प्रीङ् प्रीतौ दिवादिः विध्यादिलिङ्॥

नि०प. आश्वयुक्कृष्णपक्षे । आश्वयुजः आश्विनस्य कृष्णपक्षे ॥

नि० प.६३ अपामार्गमिति –(आघाडा) इति महाराष्ट्रभाषायां तुंबी (भोपळीचीं पानें)प्रपुन्नाटमित्येव युक्तः पाठः निर्णयाब्धिचतुर्वर्गचिन्तामण्यादिषूक्तत्वात् । प्रपुन्नाटः टाकळा इति प्रसिद्धिः ॥

सां० प.६३ इयं क्षीरप्रतिपत् अस्यां क्षीरव्रतमित्यादि (च.चि.प.३३७;) बलिमालिख्येति ।चतुर्वर्गचिंतामणौ भविष्ये । भूमौ मंडलके शुभे । बलिमालिख्य दैत्येंद्रवर्णकैः पंचरंगकैः । गृहस्य मध्ये शालायां विशालायां ततोऽर्चयेत् । लोकश्चापि गृहस्यांत. शय्यायां शुक्लतण्डुलैः । संस्थाप्य बलिराजानं फलैः पुष्पैः सुपूजयेत् । इत्यादि तत्रायं मंत्रः । बलिराजमिति । यमद्वितीयेति । यमो यमुनया पूर्वं भोजितः स्वगृहेऽर्चितः।अतो यमद्विती-

येयं त्रिषु लोकेषु विश्रुता इति भविष्ये ॥

नि० प.६४ भगिनीहस्तेन। एतद्विधानमपि तत्रैव ॥

तद्विधिस्त्विति। तद्विधिः भीष्मपंचकविधिः नारदीये।अतो नरैः प्रयत्नेन कर्तव्यं भीष्मपंचकं। "कार्तिकस्यामले पक्षे स्नात्वा सम्यग्यतव्रतः। एकादश्यां तु गृण्हीयाद्व्रतं पंचदिनात्मकं" इ० व्रतं गृहीत्वा पञ्चामृतैः पंञ्चगव्यैःविष्णुं संस्नाप्य संपूज्य पायसं निवेद्य द्वादशाक्षरमष्टोत्तरं जप्त्वा षडक्षरेण घृताक्तान्यवान्व्रीहींश्चाष्टोत्तरशतं हुत्वा भूमौ स्वपेत्। एवं पञ्चदिनेषु कार्यम् विशेषस्तु हेमाद्रिकृतचिन्तामणौ द्रष्टव्यः। व्रतकथाऽपि तत्रैव ॥

सां० प.६४। हरेरिति। इदं वाराहपुराणे ॥

नि० प.६५ चतुर्दश्यां। (हे.च.चि.भविष्ये) कार्तिकस्य सिते पक्षे चतुर्दश्यां नराधिप। सोपवासस्तु संपूज्य हरिं रात्रौ जितेन्द्रिय इत्यादि। बहुलचतुर्थी कृष्णचतुर्थी॥

सां० प.६६ सा ॥ स्कंधषष्ठीत्वेनेत्यर्थः, । दत्तात्रेयजयंती । उक्तं च स्कांदे सह्याद्रिखण्डे " मार्गशीर्षे तथा मासि दशमेऽह्नि सुनिर्मले । मृगशीर्षयुते पौर्णमास्यां यज्ञस्य वासरे । जनयामास देदीप्यमानं पुत्रं सती शुभम् । तं विष्णुमागतं ज्ञात्वा अत्रिर्नामाकरोत्स्वयम् । दत्तवान्स्वस्य पुत्रत्वाद्दत्तात्रेय इतीश्वरः" इति । इयं प्रदोषव्यापिनी ग्राह्येति वृद्धाः (नि.सिं.) ॥

नि० प.६७ माघशुक्लनवमीति।अस्यामेवाचार्या बदरिनारायणमगच्छन्

सां० प.६७ भीमद्वादशी । अस्यां निराहार इति हेमाद्रिणोक्तम् एतस्या व्रतविधिः कथा च तत्रैव स्पष्टतरा ॥

नि० प.६८ उपवासो नैव कार्यः । वैष्णवानामन्यव्रतनिषेधादिति भावः

सां० प.६८ पोळिकादहनेति । इदं भविष्योत्तरे पुराणे कृष्णधर्मसंवादांतर्गतरघुराजपौरसंवादे ॥

नि० प.६९ वसंतोत्सव इति इदं भविष्योत्तरे धर्मकृष्णसंवादे वसंते

किंशुकाशोक इत्यादिना स्पष्टम् (हेमाद्रिकृतचतुर्वर्गचिं०) तत्र मंत्रः।"चूतमग्र्यं वसंतस्य माकंद कुसुमं तव। सचंदनं पिबाम्यद्य सर्वकामार्थसिद्धये" इति॥

कृष्णद्वितीयेति। शुचौ आषाढे। ऊर्जे कार्तिके। तपस्ये फाल्गुने। शुचिस्त्वयम् आषाढे। कार्तिके बाहुलोर्जौकार्तिकिकौ। स्यात्तपस्यः फाल्गुनिक इति नामलिङ्गानुशासनम्॥

अमावास्येति। इयमपराह्णव्यापिनीग्राह्येत्यन्यत्र॥

इति श्रीमदिति इति एवं छलानांमर्यादोल्लंघिनां मर्यादा च स्मृतिरूढ्यनुगमनम् कुलानि समुदायाः तएव करिणः तेषां कुंभानि तानि विदारयंति तच्छीला तथोक्ताः श्रीमंतः कांतिमंतः श्रीः शोभा कांतिसंपद इत्यभिधानात् ते च ते छलकुलकरिकुंभविदारिणस्तथोक्ताः तैः छलान्युपनामकैरित्यर्थः। स्खलितं छलम्। कुलं जनपदे गोत्रे सजातीयगणेऽपि च भ-

वने च तनौ क्लीबम् । कुंभौ घटेभमूर्द्धांशौ इत्याद्यभिधानानि । कृत इति शेषः कालतरंगः कालनिर्णय इत्यर्थः । पूर्णः संपूर्णः ॥

अथाशौचतरंगः ॥

अथाशौचे प्राय आह्निकाकर्तव्यत्वात्प्रकल्प्य चापवादविषयमिति न्यायेनादावाशौचं निर्णीयते ॥

नि० प. ७० पात इति तथोक्तं त्र्यंबकेण गर्भिण्याः पंचषष्ठमासयोर्गर्भनाशः पात इत्युच्यते तत्र गर्भिण्या माससमसंख्यया पंच षट् दिनानि यथाक्रममाशौचम् इति ॥

सां० प. ७० ब्राह्मणादि ब्राह्मणक्षत्रियवैश्यशूद्रजातीया । शावाशौचं स्नानेनैव शुद्धिर्वा नक्षत्रपर्यंतं सूर्यदर्शनपर्यंतमित्यादि । यथा[illegible]र्थं ग्राह्यम् ॥

नि० प. ७४ क्षत्रस्येति मिताक्षरायां पराशरशातातपादिवचनैकवाच्यता कृता तत्र द्रष्टव्यम् ॥

सां० प. ७७ संपाते प्राप्ते ॥

सां० प. ७८ गुरुणा दशाहाशौचेन। लघुना ऽयहाद्याशौचेन ॥

सां० प. ८२ वैश्वदेव इति श्रीकृष्णनिवेदनेन दोषपरिहारे न वैश्वदेव इति केचित् ॥

नि० प. ८३ दोषभागिति परान्नग्रहणादिदोषभाक् न भवतीत्यर्थः ॥

सां० प. ८४ त्रयाणां ब्रह्मचारिगृहस्थवानप्रस्थाश्रमाणाम् ॥

नि० प. ८६ उदकं अंजलिदानादि ॥

सां० प. ८६ कालात्यये गतेऽपि काले॥

स्फोटयेयुः। ज्ञात्यादिबांधवा घटस्फोटनं कुर्युः श्रीमध्वपतितुष्टिदः श्रीमदानंदतीर्थांतर्गतभगवान्नारायणः तत्तुष्टिदः प्रियकारकः ॥

अथान्हिकतरंगः॥

नि० प. ८८ प्रत्यहं प्रतिदिनम्। ब्राह्मे इति। तथाच मनुः "ब्राह्मे मुहूर्ते

बुध्येत धर्मार्थौ चानुचिन्तयेत् । कायक्लेशांश्च तन्मूलान्वेदतत्त्वार्थमेव चेति" ॥ प्रहरद्वयं शयानो हि ब्रह्मभूयाय कल्पत इत्यभिप्रायेणोक्तम् षड्‌टिकेति । अपराधं पादस्पर्शादि ॥

सां० प. ८८ चान्द्रायणं चरेदिति तद्गृहीत इति शेषः ॥

सां० प. ८९ वामपादौ इति बहुषु पुस्तकेषु पाठः परं चैकस्मिन्वामपादमिति स एव युक्त इति भाति आदौ वामपादं प्रक्षाल्य ततोऽनन्तरं परं दक्षिणं क्षालयेत् ॥

नि० प. ९० मृदेति । मृत्तिकया गुल्फपर्यंतं प्रलिप्य जानुपर्यंतं जलेन क्षालयेत् ॥ पादम् चतुर्थांशः । शूद्राचरणमाह गंधस्येति । गंधः दुर्गंधः ॥

सां० प. ९० यतिवद्गंण्डूषा इति । यतिना यथा कार्यास्तथा ॥

सां० प. ९१ आदिपदाभ्यां देवादिभ्यो देवतीर्थादिभिरित्यत्रत्याभ्याम् ॥

तत्सर्वं तत् कर्म मुक्तकेशेन अयज्ञोपवीतिना च कृतम् ॥

नि० प. ९५ निर्हृत्य निःशेषेण तृणादिना अन्नं निष्कास्य

नि० प. ९६ गच्छन् इति गच्छन् प्रत्यङ्मुखश्च उक्तं च स्मृत्यर्थसारे प्राङ्मुख ईशानाभिमुखो वा दक्षिणबाहुमुद्धृत्यांतर्जानुकरमुपविश्येति कषायकटुकसुगंधिकंटकोक्षीरवृक्षगुल्मलतादीनामेकेन प्रक्षालितेन वाग्यतो दन्तान्धावयेत्। तत्र वृक्षजकाष्ठं स्यादव्रणं मृदुकीटाद्यदूषितम्।द्वादशाङ्गुलमष्टाङ्गुलं वा। कनिष्ठिकाग्रसमस्थूलं पर्वार्धकृतकूर्चकम् इत्यादि ॥

सां० प. ९७ उपस्पृश्यमाधवइत्यत्रउपस्पृश्यमानव इतिवाच्यम् ॥

सां० प. ९७ दन्तधावनं कृत्वा पश्चात्सम्यक् त्रिराचाम्येति।संशोध्य दन्तानाचम्य विधिवत्स्नानमाचरेदिति स्मृत्यनुसारेणेदम् । अथस्नानम् । स्नानमूलाः क्रियाः सर्वाः श्रुतिस्मृत्युदिता नृणाम् । अस्नातस्तु पुमान्नार्हो जपहोमादिकर्मसु। गुणा दशस्नानपरस्य पुंसो रूपं च तेजश्च बलं च शौर्यम्। आयुष्यमारोग्यमलोलुपत्वं दुःस्वप्नघातश्च तपश्च मेधा। परं च।

स्नाने मनः प्रसादः स्याद्देवा अभिमुखाः सुधीः । सौभाग्यश्रीः सुखं पुष्टिरित्याद्युक्त्का पापनाशकत्वाद्युक्तम् ॥

नि० प. ९९ क्रमः पादविक्षेपः । क्रमुपादविक्षेपे इति धातोः । यावदर्थमाह शालग्रामचक्राङ्कितादिरूपे क्रियायावाचकत्वात् उपसर्गेष्विति शेषः । छन्दसि परेऽपि व्यवहिताश्चेति अभीत्यत्र ॥

सां० प. १०० देवस्य त्वेति । देवस्य त्वा सवितुरिति मन्त्रेण ॥

नि० प. १०१ पच्छः आपोहिष्ठा मयोभुवः । ता न ऊर्जे दधान । इतिपादंपादम् । दिव्यस्नानमिति। स्नानं च द्विविधं प्रोक्तं वारुणेतरभेदतः । तत्रापि वारुणं मुख्यमितरद्गौणमेव तु । आग्नेयं वारुणं ब्राह्मं वायव्यं दिव्यमेव च । सारस्वतमिति स्नानं स्मृतं षोढैव तत्र तु । आग्नेयं भस्मना स्नानमद्भिर्वारुणमुच्यते ॥ आपोहिष्ठामयं ब्राह्मं मंत्रस्नानं च तत्स्मृतम् । पच्छोऽर्धर्चश ऋक्कशश्च मार्जनं तन्मयं तृचे । ब्रह्महस्तच्युतं तोयं शिरसा

धारयेदित्यादि स्मृत्यर्थसारे कदा कथं कार्यमिति तत्रैव ॥

सा० प. १०१ ध्यानस्नानमिति धर्माब्धौ तु विष्णुपादोदकविप्रपादोदकप्रोक्षणविष्णुध्यानादीत्युल्लेखः कृतोऽस्ति । संक्षालयेत् संक्षालितमितिध्येयमित्यर्थः ॥

नि० प. १०२ तीर्थाद्यभाव इति । नद्यादीनामभावे उष्णोदकेन कूपाद्युदकेन वा स्नानं कार्यम् । उक्तमग्रे । अभावेकूपवाप्यादेरिति । तीर्थं शास्त्राध्वरेक्षत्रोपायेत्यादिविश्वः ॥

सां० प. १०२ शोणभद्रादयः । असमुद्रगत्वादस्य ग्रहणम् । अत्रेत्यादिशब्देन न तावद्ब्रह्मपुत्रादयस्तेषां समुद्रगत्वेन ग्रहणात् । पावनं पवित्रं पवित्रकारकं वा । पूञ् पवने ॥

नि० प. १०३ द्वारकायां चेति । इदं गोपीचंदनमाहात्म्यं गर्गसंहितायामपि तत्र द्वारकाखण्डे द्वारकामाहात्म्ये वेदादौगोपीचंदनोपनिषदि च ॥

तत्पाकम् । तया कृतमन्नादि । निष्फलम् । नैवेद्यवैश्वदेवानर्हम् । भक्ष्यायोग्यं च ॥

चतुर्थ्यंतैः ॐकेशवाय नमोंतैः नमःशब्दो अंते येषां नमःस्वस्तिस्वाहेत्यादिना विहितचतुर्थ्यामपि अज्ञानिनां स्पष्टार्थम् ॐकेशवाय नमः इत्यादि द्वादशभिरिति यावत्॥

नि० प. १०७ ॐनामेति। अवतीति ओम् । अव् रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छाप्त्यवादीप्त्यालिंगनहिंसादानभागवृद्धिषु स्पष्टं श्रीराघवेंद्रस्वामिकृतगीताटीकायाम् । अधिकोच्चगुणत्वतः अधिकोच्चगुणत्वाद्धेतोः ॥

आपालनात् । पा पाने । आङ् मर्यादादौ ॥

नि०प. १०८ नवप्रणवसंयुक्तैः ॐभूः ॐभुवः इत्यादिभिः ॥

आकाशे । भूमौ प्रथमे शिरसि द्वितीये आकाशे तृतीये पुनश्चाकाशे

चतुर्थे । मस्तके पुनरेव मस्तके ॥

सां०प.१०९ हिंसंतीव हिसंति चेति वा ॥

सां० प. १११ त्रिपदीम् गायत्रीम् ॥

इति चेदिति स्पष्टमिदम् । पांगरीआचार्यकृताह्निके तस्योल्लेखस्तु मदीयान्हिकेऽपि कृतोऽस्ति तत्र द्रष्टव्यम् ॥

सां० प.११२ प्रक्षाल्येति पादौ प्रक्षाल्य दर्भपाणिः सन् प्राङ्मुख उदङ्मुखो वा कुशासने उपविश्येत्यन्वयः ॥

द्विः परिमृज्य । द्विवारं मार्जनं कृत्वा "द्वित्रिचतुर्भ्यः सुच्" ॥

व्यासश्चेति । देवान् एकैकं ऋषीन्द्वौद्वौ पितृंस्त्रींस्त्रीन् ॥ अञ्जलीन्दद्यात् । अथवाऽर्हति पितरस्त्रीन्स्त्रीनित्येवयुक्तः पाठः । तत्रैव । कृतस्वाध्यायः प्रथमं तर्पयेच्चाथ देवताः । जान्वाच्य दक्षिणां दर्भैः प्रागग्रैः सयवैस्तिलैः । एकैकाञ्जलिदानेन प्रकृतिस्थोपवीतिकः । समजानुद्वयो ब्रह्मसूत्रहार उदङ्मु-

खः। तिर्यग्दर्भैश्च वामाग्रैर्यवैस्तिलविमिश्रितैः। अंभोभिरुत्तरक्षिप्तैः कनिष्ठामूलनिर्गतै। द्वाभ्यां द्वाभ्यामञ्जलिभ्यां मनुष्यांस्तपर्येत्ततः। दक्षिणाभिमुखः सव्यं जान्वाच्य द्विगुणैः कुशैः। तिलैर्जलैश्च देशिन्या मूलदर्भाद्विनिःसृतैः। दक्षिणां सोपवीतः स्यात्क्रमेणाञ्जलिभिस्त्रिभिः। सन्तर्पयेद्दिव्यपितृंस्ततपरांश्च पितृन्स्वकानित्यादि ॥

नि० प.११५ विभक्त्या तु द्वितीययेति। इदं तु सामान्येन यदाण्यन्तस्तर्पयामीति प्रयोगस्तदैव। गतिबुद्धिप्रत्यवसानार्थेत्यादिना। अतो न तावत्प्रजापतिस्तृप्यत्वित्यत्रेति बोध्यम् ॥

सां० प.११५ हेमरूप्यमयमिति। ताम्रकस्येति संबंधसामान्ये षष्ठी ॥

नि० प.११६ महालयप्रसंगे पञ्चपञ्चाशत्तमे (५५) पत्रे तातांम्बेत्यादिना ॥

नि० प.११७ श्राद्धाङ्गतर्पणमिति। मधु मद्यं। नारम् तस्येदमित्यण् प-

योविशेषणमेतत् रुधिरं शोणितम् तैः कृते तर्पणे यत्पातकं तत्प्राप्नोतीत्यर्थः ॥

द्विजःस्त्रीनित्यत्र विसर्गोऽशुद्धत्वेन पतितः। द्विजः त्रीन् दर्भान् बिभृयादित्यन्वयः ।

नि० प. ११८ अदर्भाः अपवित्रा इत्यर्थः ॥

नि० प. ११९ दक्षिणाग्रं । दक्षिणायां दिशि अग्राणि दशाः यस्य तत् वस्त्रम् तथैव पश्चिमाग्रमित्यत्र । क्षालने । अर्हमिति शेषः क्षालनीयमित्यर्थः ॥

कुशासने इति । कुशासन इत्येव युक्तः पाठः । अग्रे च भूमौ कुशासनमित्युक्तेः ॥

सां० प. ११९ शारीरम् । शरीरसंबंधि आसनमित्यनुवर्तते ॥

ऊर्वोरुपरीति जानोरुपरिभागे “मांडी” इति भाषायाम्। विशेषोगी ति-

ष्ठेदित्यर्थः ॥

नि० प. १२० बदर्यस्थि बदरीफलांतर्गतबीजम् द्रष्टव्यमनुपदमेव ॥

सां० प. १२१ आरभ्येति प्रथममनामिकामूलमारभ्यजपारंभं कृत्वाक-निष्ठांगुलिपर्वभिश्चानामिकाग्रेण मध्यमाग्रेण तर्जन्यग्रमध्यमूलपर्वभिश्च म-ध्यममूलपर्यंतं गणयित्वा पुनश्च तत्रैवारभ्य तर्जनीमूलपर्वमध्याग्रपर्वभिः मध्यमानामिकाग्रकनिष्ठाग्रमध्यमूलानामिकामूलपर्वभिराकलय्य पुनः प्रदक्षिणया पूर्ववद्गणनीयमित्यर्थ इति केचित् ॥

नि० प. १२२ मनःप्रहर्षणमिति मनोहर्षता । मनःप्रकर्षणमिति पाठे मनःसंयमनं इत्यर्थः ॥

बहिर्जानुः जान्वोर्बहिर्हस्तौ कृत्वेत्यर्थः । निष्ठीवे मुखेन श्लेष्मोत्सर्गे। पतितश्चांत्यजालोके । पतितस्यांत्यजालोके इति वा पाठः पतितस्य दर्शने अंत्यजस्य चेत्यर्थः ॥

सां० प.१२२ पैतृके रौद्ररक्षसीत्येव पाठः।एकमात्रयाऽशुद्धमिति भाति स्नानं समाचरेत् । अश्वारूढं यतिं दृष्ट्वा खट्वारूढां रजस्वलाम् । सकेशां विधवां नारीं सचैलं स्नानमाचरेदित्यपि ॥

सां० प. १२४ ॐकुंकूर्माय नम इति। अत्र कूर्माय कुंनमः इति केचित्। तेषां मते'कुंनमः, 'मंनमः' इत्यादिमंत्राः। प्रकृतौ तु 'कुम्,'मम्' इत्यादयः । उपरितनं तंत्रसारे स्पष्टम् ॥

सां० प. १२५ ब्रह्महत्या०कुक्षौ इत्यादि ।ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम् । तत्संयोगपदद्वंद्वमंगप्रत्यंगपातकम् । उपपातकरोमाणं रक्तश्मश्रुविलोचनम् । पिंगोर्ध्वकेशं दुर्गंधं स्मरेत्प्रादेशमात्रकम् । खड्गचर्मधरं कृष्णं कुक्षौ पापं विचिंतयेत् ।

सां० प. १२६ मणिबंधे ० करशुद्धिरित्यादि । मणिबन्धे प्रकोष्ठ च कूर्परे हस्तसन्धिषु । तत्पृष्ठपार्श्वयोश्चैव करशुद्धिरुदाहृता ।

सां० प. १२९ दक्षकर्णे ॐउंउग्राय नमः ॥ वामकर्णे ॐऊंऊर्जाय-
नमः । इत्याद्युत्तरत्र संबंधो ज्ञेयः ॥

सां, प. १३१ ततः संध्योपासनमित्यतो बह्मादिशव्दवाच्यत्वोक्तेरित्यंत-
ग्रंथो मास्तु मंत्रप्रकारानन्तरमग्रेतनविधानेन द्विरुक्तित्वात् (प. १४०)

नि० प. १३३ यद्यपि ब्रह्मचर्यादीनामित्यादि । नात्र स्वीयमतप्रदर्शी-
नार्हा वयम् । एतदुपरि स्पष्टम् करहाटनिवासिगोपाळाचार्याणामाह्निके
इति वरखेडनिवासिएरिराघवाचार्यप्रभृतिभिर्मामुक्तम् । मदीयाह्निकेऽपि
द्रष्टव्यम् । भागवते नारायणवर्मणि । पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि ।
मुखे शिरस्यानुपूर्व्यादोंकारादीनि विन्यसेत् । अत्र "आनुपूर्व्यात् संप्रदा-
यक्रमा"दितिविजयध्वजाचार्याः ॥

नि० प.१३४ अथाष्टौ महामन्त्रान्कथयति।अथव्याहृतिमंत्र इत्यादिना॥

सां० प.१३५ सूर्यसप्रभः । 'समानस्यछंदस्यमूर्द्धप्रभृत्युदर्केषु' इति स-

मानस्य सः ॥

नि० प.१३६ 'विं विष्णवेनमः। रेंमधुसूदनाय नमः। णेंत्रिविक्रमाय नमः'। अत्र 'वंविष्णवेनमः। रेंमधुसूदनायनमः। ण्यंत्रिविक्रमायनमः' इत्यस्तु परंतु पुस्तकांतरेष्वपि विमित्याद्येव ॥

नि० प.१३७ रविभः रविरिव भा यस्य सः। शंखचक्रगदाब्जेतः। इतः युक्तः अनेन मूर्तिलक्षणान्यपि ज्ञेयानि ॥

सां०प.१३९ गायत्र्याइ०।हरिपार्षदान् विष्णुभक्तान् देवान् विप्रान् गुरूंश्च- प्रणम्य विष्णुं ध्यायन् हृदीति शेषः गायत्र्यास्त्रिगुणमष्टाक्षरं जपेदित्यन्वयः॥

विनापुत्रमित्यादि। अभिवादलक्षणमुक्तंमनुना। अभिवादात्परं विप्रो ज्यायांसमभिवादयन्। असौ नामाहमस्मीति स्वं नाम परिकीर्तयेदिति॥

सां० प. १४१ वृत्तं वर्तुलाकृति। द्रव्यं त्विति स्मृत्यर्थसारे च। शालिश्यामाकनीवारा व्रीहिगोधूमयावकाः। एतेषां तंडुला होम्या यावना-

लाः प्रियंगवः। प्रियंगवः शालयश्च गोधूमा व्रीहयो यवाः । स्वरूपेणा-
पिहोम्याः स्युः स्वरूपेणैव वै तिला इत्यादि। विशेषस्तु हेमाद्रौ ॥

नि० प.१४२ अस्य कर्तार इति।होमे मुख्ययजमानः पत्नी पुत्रश्च कन्यका।
ऋत्विक् शिष्यो गुरुभ्राता भागिनेयः सुतापतिः इ०(स्मृ०सा०)दक्षवचनम्॥

सां० प.१४२ एकांते इत्यादि । अस्य संकलितार्थस्तु अधिकारी मु-
मुक्षुरित्यादिना स्पष्टोग्रे ॥

नि० प.१४७ आगमार्थं त्विति । आगमार्थं तु देवानां गमनार्थं च र
क्षसां । कुरु घंटारवं तत्र देवताव्हानलांछनम् । अज्ञानाज्ज्ञानतो वाऽपि
कांस्यघंटां न वादयेत् । राक्षसानां पिशाचानां तद्देशे वसतिर्भवेत् । सर्ववा-
द्यमयी घंटा देवदेवस्य वल्लभा । तस्मात्सर्वप्रयत्नेन घंटामाचाल्य वादयेदिति
श्रीमज्जयतीर्थप्रणीतपद्यमालायाम्। मंडपध्यानमिति । उक्तं चाचार्यैः सौ-
वर्णमंडपं ध्यायेद्धेमरत्नोपशोभितमित्यादि ॥

निं० प.१४८ "स्वामिन्नमः श्रीरमण प्रसीद"। आराध्यसे प्राणभृतामित्यस्यायमंतिमः पादोऽत्राशुद्धत्वेनैव (नि०प.१५१)

सां० प.१५० इति विश्वः इत्यस्याग्रे (३) तृतीयोङ्को ज्ञेयः। अग्रे चपंचमस्थाने चतुर्थः। षष्ठस्थाने पंचमो ज्ञेयः (नि० प.१५१) पश्यत स्तोत्रम्॥

नि० प.१५१ य एतदितीति। अत्र संस्तवं परमं जपन्नित्यत्र जपेदिति वा पाठः। यः कंडुमुनिः एतद्ब्रह्मपाराख्यं परमं संस्तवं जपन् केशवं समाराध्य परमां सिद्धिमवापेत्यन्वयः॥

नि० प.१५२ पीठमध्ये। अत्र सर्वत्र देवतानामादौ ॐकारो ज्ञेयः। उक्तं च पद्ममालायाम् पूजाविधौ च देवानां पूजावरणयोर्वदेत्। तन्नामचचतुर्थ्यंतं प्रणवादि नमोन्तकमिति॥

नि० प.१५४ गरुडमुद्रेति। अस्यां तर्जन्यावपि ग्रथयंति आवाहनादिमुद्रालक्षणानि त्वग्रे (सां० प.१५९)॥

सां० प.१६२ प्राणात्मने इत्यादि। ततः प्राणात्मने पूर्वमुक्त्वा नारायणाय च। स्वाहांतमिति पञ्चैवा आहुतीः क्रमशो वदन् ॥ (प० मा०)

नि० प.१६३ भिस्सटम् दग्धान्नम्। "भिस्सटादग्धिका" इत्यमरः शेषनामानि सुगम्यानि ॥

सां० प.१६७ कोद्रवमिति कोरदूषनामधान्यम् 'हरीक' इतिम०भाषायां

नि० प.१६८ अविभक्ताइति। यदि ते पृथक्पाकं कुर्युस्तर्हि यज्ञोऽपि पृथक् कार्यस्तैरित्यर्थः। एकेनैव न प्रतिपाकं कार्यः। मिताक्षरायाञ्च। पुरुषार्थत्वे वैश्वदेवाख्यं कर्म न प्रति पाकमावर्तनीयम्। तस्मादथ सायंप्रातरित्यादिनोत्पत्तिप्रयोगौ दर्शितौ। इत्यादि ॥

सां० प.१६८ कामी श्रीधर्ममोक्षार्थमिति। श्रीः संपत्तिः धर्मः कर्तव्यकर्म मोक्षश्च एतदर्थमित्यर्थः ॥

सां० प.१६९ पुरःसरशब्देनेति। भृत्यातिथिपुरःसरः अत्रस्थपुरःसरश-

ढेनेत्यर्थः ॥

उद्धृत्येति । वैश्वदेवार्थमन्नं स्थाल्याः पृथकृत्य स्थालिस्थान्नभागो भिक्षवे देय इत्यर्थः ॥

नि० प.१७० चतुरस्रमिति । ब्राह्मणादिवर्णानां यथासंख्यं ज्ञेयम् ॥

सां० प.१७३ विमलं विगतो मलो यस्मात् तत् शुद्धमित्यर्थः ॥

सां० प.१७७ बटोः ब्रह्मचारिणः ॥

नि० प.१७८ मंत्रत इति। मंत्रतो वेदादिमंत्रोच्चारणात् तंत्रतः कुत्रचिच्छास्त्रकथितभिन्नत्वात् । छिद्रम् अपूर्णं । पूर्णप्रतिबंधकम्। निश्छिद्रं पूर्णं (निर्गतं छिद्रं यस्मादेवम्) तव कर्मानुसंकीर्तनं करोति कर्मणि समाप्ते पश्चात्त्वन्नामग्रहणे सर्वं कर्म पूर्णं स्यादेवेत्यर्थः॥ जातुचित् कदापि ॥

छल्लारीति । छल्लारयश्च ते नराश्च तेषु सिंह इव तत्कुलदीपक इत्यर्थः । तेन कृते स्मृत्यर्थसागरे आह्निकतरंगः समाप्तः ॥

## ॥ अथ वस्तुशुद्धिः ॥

सां० प.१७८ खननादित्यादि । याज्ञवल्क्यः । भूशुद्धिर्मार्जनाद्दाहात्कालाद्गोक्रमणात्तथा । सेकादुल्लेखनाल्लेपादिति ॥

दुष्टा भूमिरित्यत्रदुष्टान्विता त्रिधेति पाठो मिताक्षरायाम् ॥

सां० प.१७९ रज्जुः बल्वजादिनिर्मिता फलमाम्रादि वासो वस्त्रं विदलं वैणवादि चर्म अजादीनाम् विदलचर्मणोर्ग्रहणं तद्विकाराणां छत्रवस्त्रादीनामुपलक्षणार्थम् इत्यादि मिता० ॥

सां० प.१८२ पक्वेष्टकचितानि । पक्वेष्टकादिभिश्चितानि धवलगृहादीनि चिञ्चयने इष्टकेषीकेति ह्रस्वः ॥

उद्धृताविति इदं देवलवचनम् अग्रेऽपि स एव नाम देवल एव ॥

सां० प.१८३ इत्युदकेति । अन्त्यैरपिकृते कूपे सेतौ वाप्यादिके तथा । तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते ॥

सां० प.१८४ शेषैरुदकगोमूत्रैरित्यत्र सोखैरुदकगोमूत्रैरिति मिताक्षरायाम् उखरमृत्तिकासहितेन गोमूत्रेण उदकेन वा। सश्रीफलैः बिल्वफलसहितैः। अंशुपटः वल्कलतंतुकृत इति वा। सारिष्टैः अरिष्टफलसहितैः॥

सा० प.१८५ विद्यातपोभ्यां पूतात्मा इत्यत्र विद्यातपोभ्यां भूतात्मा इति च पाठः। भूतात्मा सूक्ष्मादिलिङ्गशरीरावच्छिन्नो जीवात्मा। विद्यया पापक्षयहेतुना। वेदांतादिना। तपसा च शुद्धो भवति॥

नि० प.१८६ अथोपसंहारमाह। एवमादीति सारज्ञैः शास्त्रार्थतत्त्वज्ञैः॥ त्रिशून्यमिति त्रिः शून्यम् षट् चंद्रः एकम् एतैर्मिते (१६०३) तमे शाके शालिवाहनशके यस्मिन् अश्विनोधिकसंज्ञकः मार्गपौषौ क्षयाभिधौ अग्रे च चैत्रोऽधिकसंज्ञकः तस्मिन्वर्षे कार्तिके अस्मिन्स्मृत्यर्थसागरे वस्तु शुद्धितरंगसमाप्तिः स च मध्वांतर्गतविष्णुप्रीतये भवतु॥

सां० प.१८६ छलारीति। छलारीत्युपाह्वाः नारायणाचार्यास्तेषां पुत्रो

नृसिंहाख्यस्तेन रचितो यः पण्डितानामज्ञानिनां चापि साधारणः समान्येन स्फुटः स्पष्टः अयं स्मृत्यर्थसागरः पितृतुष्टये भवत्वित्यनेनैवालम् ॥

॥ इति स्मृत्यर्थसागरटिप्पणी ॥

